# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४९ वर्षे

१–२ अङ्कौ

ज्येष्ठ-भाद्रपदपूर्णिमे

जून–सितम्बर, १९९४ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

**डॉ० आद्याप्रसादमिश्रः**

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी




४९ वर्षे

१-२ अङ्कौ

वार्षिकं मूल्यम्—१०० रूप्यकाणि

जून–सितम्बर, १९९४ ई०

परामर्शदातृसम्पादकमण्डलम्

डॉ० मण्डनमिश्रः, कुलपतिः, अध्यक्षः

१. डॉ० श्रीपतिरामत्रिपाठी,
वेदवेदाङ्गसंकायाध्यक्षः

२. डॉ० राधेश्यामधरद्विवेदी,
दर्शनसंकायाध्यक्षः

३. डॉ० कैलासपतित्रिपाठी,
साहित्य-संस्कृति-संकायाध्यक्षः

४. डॉ० पुरुषोत्तमप्रसादपाठकः,
श्रमणविद्या-संकायाध्यक्षः

५. डॉ० सत्यव्रतशर्मा,
आधुनिक-ज्ञान-विज्ञान-संकायाध्यक्षः

६. डॉ० आद्याप्रसादमिश्रः,
संयोजकः



प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः —
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# विषयानुक्रमणी





# सम्पादकीयम्

सारस्वतीसुषमापत्रिकाया एकोनपञ्चाशद्वर्षस्य प्रथमद्वितीयाङ्कौ प्रकाशमानीयेते। अत्र संयुक्ताङ्के विशिष्टविदुषां चिन्तनप्रसूनानि शास्त्रीयज्ञानविज्ञानसौरभसंयुक्तानि नवविचाररत्नानि विराजन्तेतमाम्। अत्रादावभिनवपाणिनिकल्पैर्महामहोपाध्यायैः पूज्यैः गुरुभिराचार्यश्रीरामप्रसादत्रिपाठिवर्यैः 'कतिपयपाणिनीयसूत्रमीमांसा' इति विषयमधिकृत्य 'चतुर्थी सम्प्रदाने, अपादाने पञ्चमी' इत्यादीन्यूनविंशतिसूत्राणि व्याख्यातानि। व्याख्यानेऽस्मिन्नर्थोदाहरणप्रतिपादनपुरस्सरं तत्रत्यं निखिलं रहस्यं यथाशास्त्रं सप्रमाणं विशदीकृतम्।

पण्डितप्रकाण्डेन तत्र श्रीरामचन्द्रुडुमहाशयेन श्रीमदप्पय्यदीक्षितस्य न्यायरक्षामणिग्रन्थस्य प्रतिपाद्यं महता संरम्भेणोपन्यस्तम्। न्यायरक्षामणिर्ब्रह्मसूत्राणां प्रथमाध्यायस्य शङ्करभगवत्पादभाष्यानुसारिणी व्याख्या वर्तते।

व्याकरणवेदान्ताद्यनेकशास्त्रेषु धुरीणा वेदान्तविभागाध्यक्षाः श्रीदेवस्वरूपमिश्रमहोदयाः 'अपभ्रंशानां साधुपूर्वकत्वविमर्शः' इति विषयमवलम्ब्य समासेन स्वीयान् विचारान् प्रकाशितवन्तः। तत्र लोके प्रयुक्तानामनेकेषामपभ्रंशशब्दानां साधुसंस्कृतशब्दमूलकत्वमुदाहृतम्।

अतः परं नामार्थविमर्शः, मीमांसादर्शनेऽपूर्वप्रामाण्यपरीक्षा, भारतीयदर्शने ब्राह्मणश्रमणधारयोर्विकासक्रमः, परलोकाश्रितभावनायाः क उपयोगः, काव्यार्थमीमांसा, विद्यावतां सकलमेव गिरां दवीयः, इत्यादीन् विषयानधिकृत्य तत्तद्विद्वद्भिर्गभीरो गवेषणापूर्णश्च लेखोऽलेखि। इमे निबन्धाः पत्रिकायाः सुषमां वर्धयन्तीति नितरां प्रमोदास्पदम्।

पत्रिकायाश्चरमे भागे लौगाक्षिभास्करकृतोऽर्थसङ्ग्रहाभिधो ग्रन्थस्तन्त्रप्रकाशिकाभाष्यविभूषितो विदुषां सौकर्याय संग्रथितो विद्यते। एवमस्याः पत्रिकायाः सम्पादनसम्पत्तये येषां विदुषां सारस्वतीयः सहयोगः समधिगतः, येषाञ्चाधिकारिकर्मचारिणां बौद्धिकः शारीरिकश्च सहयोगोऽवाप्तस्तेभ्यः सर्वेभ्यः साधुवादान् दित्सामि।

मन्ये, संयुक्ताङ्कस्य प्रकाशिताः लेखाः संस्कृतविदुषामनुसन्धातॄणाञ्च कृते महते उपकाराय भविष्यन्तीति मे द्रढीयान् प्रत्यय इति शम्।

वाराणस्याम्<br>मकरसङ्क्रान्तौ,<br>वि० सं० २०५३

**आद्याप्रसादमिश्रः**<br>निदेशकः<br>अनुसन्धानसंस्थानस्य<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४९ वर्षे | ज्येष्ठ–भाद्रपदपूर्णिमे, वि० सं० २०५१ | १–२ अङ्कौ |
|---|---|---|

# कतिपयपाणिनीयसूत्रमीमांसा*

**आचार्यश्रीरामप्रसादत्रिपाठी**
व्याकरण-योगतन्त्रागमविभागाध्यक्षचरः,
वेदवेदाङ्गसंकायाध्यक्षचरश्च,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

## [ चतुर्थी सम्प्रदाने—अष्टा० २।३।१३ ]

इदमपि सूत्रं स्वौजसमौट्छसित्यनेन[1] सिद्धे सति नियामकम्। अत्रापि परिसंख्यारूपः, शुद्धनियमश्चेति द्विविधोऽपि नियमः स्वीकर्तव्यः। 'अनभिहिते[2]' इत्यादिलाभस्तु पूर्ववदेव। एवं च "एकत्वादिविशिष्टानुक्तसम्प्रदानबोधकप्रातिपदिकत्वम्। सम्प्रदानगतैकत्वादिबोधकप्रातिपदिकत्वं वा" अस्योद्देश्यताऽवच्छेदको धर्मः। अन्यत्सर्वं पूर्ववदेव। एवञ्च "एकत्वादिविशिष्टानुक्तकारकबोधकप्रातिपदिकाच्चेत् चतुर्थ्येकवचनादि, तर्हि तादृशानुक्तसम्प्रदानबोधकादेव प्रातिपदिकात्" इति नियमः सम्पद्यते; परन्तु एतद् न युक्तं प्रतिभाति। मन्यकर्मणि[3] इत्यनेन कर्मणि चतुर्थीविधानात्, 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि[4]' इत्यने-

*निबन्धोऽयं "सारस्वती सुषमायाः" षट्चत्वारिंशद्वर्षीयतृतीय-चतुर्थाङ्कतः क्रमशः प्रचलन्नस्ति।

१. अष्टा० ४।१।२;
२. तत्रैव—२।३।१।
३. तत्रैव—२।३।१७;
४. तत्रैव—२।३।१२।

नापि कर्मणि चतुर्थ्या विधानात्। अतश्चैतत्सूत्रद्वयीयोद्देश्यद्वयस्यापि संग्रहेण नियमो विधातव्यः। तेन 'तादृशसम्प्रदानमन्यकर्म-गत्यर्थकर्म-एतदन्यतमबोधकप्रातिपदिकत्वमुद्देश्यताऽवच्छेदकं मत्वा इष्टसिद्धिः कार्या। अतश्च "तादृशकारकबोधकप्रातिपदिकाच्चेत् चतुर्थी विभक्तिस्तर्हि तादृशसम्प्रदान-मन्यकर्म-गत्यर्थकर्म-क्रियार्थोपपदीयकर्म-एतदन्यतमबोधकप्रातिपदिकादेव" इति नियमाकारः स्वीकार्यः। विकल्पात्मकनियमपक्षे तु—'तादृशसम्प्रदानबोधकप्रातिपदिकात् साधुत्वार्था सुब्विभक्तिश्चेत् तर्हि चतुर्थ्येकवचनाद्येव' इति नियमः कार्यः।

## [ अपादाने पञ्चमी—अष्टा० २।३।२८ ]

इदमपि सूत्रं पूर्ववदेव नियामकमिति कृत्वा—"एकत्वादिविशिष्टानुक्तकारकबोधकप्रातिपदिकाच्चेत् पञ्चम्येकवचनादि, तर्हि तादृशापादानबोधकप्रातिपदिकादेव" इति नियमस्वरूपं सम्पद्यते; किन्तु ल्यब्लोपे कर्मण्यधिकरणे चेति वचनेन ल्यब्लोपे सति अनुक्ते कर्मण्यधिकरणेऽपि पञ्चमीविधानेन, स्तोकादिभ्यः करणवाचकेभ्यः पञ्चमीविधानेन चेदं न युक्तं प्रतिभाति। अतस्तादृशापादान-ल्यब्लोपसम्बन्ध्यनुक्तकर्माधिकरण-स्तोकादिरूपकरण-एतदन्यतमबोधकप्रातिपदिकत्वं मिलितं वचनत्रितयीयम् उद्देश्यताऽवच्छेदकत्वेन स्वीकर्तव्यम्। अथवा "अपादाने पञ्चमी" इत्यस्यैव परिसंख्यात्मकनियमः स्वीकार्यः। अवशिष्टवचनद्वयस्य विधित्वमेव स्वीकार्यम्। अपादाने पञ्चमीति नियमेन तयोर्विधेयस्य बाधितत्वात्। विकल्पात्मकनियमपक्षे तु—एकत्वादिविशिष्टानुक्तापादानल्यब्लोपीयानुक्तकर्माधिकरणान्यतरस्तोकादिरूपकरण–एतदन्यतमबोधकप्रातिपदिकत्वं मिलितम्, उद्देश्यताऽवच्छेदकं मन्तव्यम्। यदि तु–अन्यतमघटिततया उद्देश्यताऽवच्छेदककोटौ गौरवं विभाव्यते, यदा पार्थक्येनैवास्य नियमपक्षस्य अङ्गीकारे लाघवमनुभूयताम्, का क्षतिः? न कापि इति सम्भाव्यताम्।

## [ कर्तृकर्मणोः कृति—अष्टा० २।३।६५ ]

कृद्योगे सत्यनुक्तकर्तृकर्मान्यितरवाचकात् प्रातिपदिकात् षष्ठी स्यादिति सूत्रार्थः। तत्र 'न लोकाव्यय०[1]' इत्यनेन अकेनोर्भविष्यदाधमर्ण्ययोरित्यनेन चास्य निषेधो भवति। एवञ्च तत्तन्निषेधविषयाऽतिरिक्तत्वेनास्योद्देश्यदले सङ्कोचः कार्यः। अथवा सङ्कोचाभावे निषेध एव कार्यः। स्वौजसमौडित्यादिनाऽस्यापि विषये षष्ठ्याः सिद्धत्वाद् नियामकत्वमस्यापि। तत्र च कर्मणि[2] द्वितीयेत्यादिवद् द्विविधो नियमः। पूर्ववदेव सर्वा व्यवस्था बोध्या। एवञ्च "एकत्वादिसंख्याविशिष्टकृद्युक्तानुक्तकारकबोधकप्रातिपदिकाच्चेत् षष्ठ्येकवचनादि, तर्हि एकत्वादिसंख्या-

१. अष्टा० २।३।६७; २. तत्रैव—२।३।२।

विशिष्टकृद्युक्त-न लोकादिविषयातिरिक्तानुक्तकर्तृकर्मान्यतरवाचकादेव प्रातिपदिकात्'' इत्येवं नियमाकारः सम्पद्यते। तेन तद्धितयोगे व्यावृत्तिः सिद्ध्यति। 'क्तस्य च वर्तमाने[1]', 'अधिकरणवाचिनश्च[2]' इत्यनयोस्तु विधित्वमेव प्रतिप्रसवरूपम्। न लोकेति निषेधकरणात्। 'कृत्यानां कर्तरि वा[3]', इत्यस्यापि उक्तनियमेन नित्यं षष्ठीप्राप्तौ विकल्पितषष्ठीविधायकत्वमेव। वस्तुतस्तु—'कर्मणि विभक्तिश्चेत्तर्हि द्वितीयैव' इत्येवंरूपेण 'कर्मणि द्वितीया' इत्यस्य नियमपक्षे, अथ च 'षष्ठी शेषे[4]' इत्यस्य 'षष्ठी चेत्तर्हि शेष एव' इति प्रत्ययनियमपक्षे तु 'कर्तृकर्मणोः कृति[5]' इत्यस्य विधित्वमेव। उक्तसूत्रद्वयीयनियमाभ्यां षष्ठ्या असिद्धेः। 'कर्मणि द्वितीया' इत्यस्य प्रत्ययनियमपक्षे, 'षष्ठी शेषे' इत्यस्यापि अर्थनियमपक्षे त्वस्य नियामकत्वं सुस्पष्टमेव। स्वौजसमौडित्यादिनैव षष्ठ्याः सिद्धत्वात्।

## [ उभयप्राप्तौ कर्मणि—अष्टा० २।३।६६ ]

उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृति, तद्योगेऽनुक्ते कर्मणि षष्ठी स्यादिति सूत्रार्थः। अदसोयमुद्देश्यताऽवच्छेदकं रूपम्—'उभयप्राप्तिककृत्प्रत्यययोगविशिष्टानुक्तकर्मबोधकप्रातिपदिकत्वम्'। तद्व्यापकं रूपम्—'उभयप्राप्तिककृत्प्रत्यययोगविशिष्टाऽनुक्तकर्तृकर्मान्यतरबोधकप्रातिपदिकत्वम्'। नियम्यं शास्त्रम्—'कर्तृकर्मणोः कृति' इति। तदीयमुद्देश्यताऽवच्छेदकं रूपम्—'कृत्प्रत्यययोगविशिष्टानुक्तकर्तृकर्मान्यतरबोधकप्रातिपदिकत्वम्'। एतद्व्याप्यं रूपम्—'उभयप्राप्तिककृत्प्रत्यययोगविशिष्टानुक्तकर्तृकर्मान्यतरबोधकप्रातिपदिकत्वम्'। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन 'कर्तृकर्मणोः कृति' इत्यस्योद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचः कार्यः। अतश्च उभयप्राप्तिककृत्प्रत्ययविशिष्टानुक्तकर्तृकर्मान्यतरबोधकप्रातिपदिकाच्चेत् षष्ठी, तर्हि उभयप्राप्तिककृत्प्रत्ययविशिष्टानुक्तकर्मबोधकादेव प्रातिपदिकात्। अतश्च कर्तुर्व्यावृत्तिः सिद्धा। तेन आश्चर्यो गवां दोहोऽगोपेनेत्यत्रागोपपदात् षष्ठी न, अपि तु तृतीयैव भवति।

## [ सप्तम्यधिकरणे च—अष्टा० २।३।३७ ]

अनुक्ताधिकरणबोधकप्रातिपदिकत्वमुद्देश्यताऽवच्छेदकं रूपम्, एतच्च संख्यावाक्यैकवाक्यताया अभावपक्षे। तत्पक्षे तु विशेष्ययोः कामचारेण पूर्ववद् द्वैविध्यमस्त्येव। गौरवभिया तत्स्वरूपं नोपन्यस्यते।

---

१. अष्टा० २।३।६७;  २. तत्रैव—२।३।६८।
३. तत्रैव—२।३।७१;  ४. तत्रैव—२।३।५०।
५. तत्रैव—२।३।६५।

तद्व्यापकं च रूपम्—अनुक्तकारकबोधकप्रातिपदिकत्वम् । स्वौजसमौ-ड्त्यस्योद्देश्यताऽवच्छेदकम्—'सामान्यतः प्रातिपदिकत्वम्' । तद्व्याप्यं रूपम्—अनुक्त-कारकबोधकप्रातिपदिकत्वम् । एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन स्वौजसमौड्त्यस्यो-द्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—'अनुक्तकारकबोधकप्रातिपदिकाच्चेत् सप्तमी, तर्हि अनुक्ताधिकरणबोधकप्रातिपदिकादेव' इत्येवं नियमाकारः सम्पद्यते। परन्तु क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति वार्तिकेन कर्मणि सप्तमी विधीयते, तस्येदानीं का गतिर्भविष्यति–इति चेदुच्यते—सप्तम्यधिकरणे चेत्यनेन[1] सहास्य वार्तिकस्योद्देश्यताऽवच्छेदकं योजनीयम् । अतश्च अनुक्ताधिकरण—इन्विषय-क्तप्रत्यययोगविशिष्टानुक्तकर्म-एतदन्यतरबोधकादेव प्रातिपदिकात्, इत्याकारो नियमः सम्पन्नः । तेनानुक्ताधिकरणतादृशकर्म-एतदन्यतरभिन्नकारकबोधकस्य प्रातिपदि-कस्य सप्तमीप्रकृतित्वेन व्यावृत्तिः सिद्ध्यति ।

यदि मिलितोद्देश्यताऽवच्छेदककल्पनायां गौरवमनुभूयते, तर्हि उक्तवार्तिकस्य सप्तमीविधायकत्वमेव मन्तव्यम्, लाघवाद् नियमापेक्षया विधित्वस्य ज्यायस्त्वाच्च । एतत्सर्वं परिसंख्यापक्षे । विकल्पात्मकार्थनियमपक्षे तु लाघवात् पार्थक्येनैव द्वयोर्नियाम-कत्वं परिष्कार्यम् । तथा हि—अनुक्ताधिकरणबोधकप्रातिपदिकाच्चेत् साधुत्वार्था सुब्विभक्तिस्तर्हि सप्तम्येव । इन्विषयक्तप्रत्यययोगविशिष्टानुक्तकर्मबोधकप्रातिपदि-काच्चेत् साधुत्वार्था सुब्विभक्तिस्तर्हि सप्तम्येव, इत्येवं प्रकारो ग्राह्यः ।

कारकविभक्तिविषयको नियमविचारः प्रायेण समाप्तः । अथोपपदविभक्ति-विषये विचारः प्रस्तूयते—

## [ प्रातिपदिकार्थं०—अष्टा० २।३।४६ ]

तत्र प्रथमाविभक्तिः कारकविभक्तिः, उपपदविभक्तिरपि । 'प्रातिपदिकार्थ-लिङ्गपरिमाणवचनमात्रे प्रथमा', 'सम्बोधने च[2]' इति सूत्रद्वयं प्रथमां विदधाति । तत्र कारकप्रथमाविषये नियमविषयको विचारः प्रदर्शित एव । उपपदविभक्तित्वपक्षे विचारः क्रियते । तत्र—'प्रातिपदिकार्थमात्रे वर्तमानप्रातिपदिकाच्चेत् सुब्विभक्तिस्तर्हि प्रथमैव' इत्येवमर्थनियम एव साधीयान् । तत्फलं तु—''विस्पष्टं पटुः, विस्पष्टपटुः'' सह सुपेत्यनेन समासो भाष्ये दर्शितः । विस्पष्टं यत् पटुत्वं तद्वानिति शाब्दबोधः । एवमेव स्तोकं पचतीति । अत्रापि स्तोकमिति नपुंसकं प्रथमान्तं चेत्युद्द्योतकारो हेतुमति चेति सूत्रे । 'स्तोकाभिन्ना विक्लित्तिः, तदनुकूलो व्यापारः' इति बोधः । एवमेव 'उष्ट्रासिका आस्यन्ते', 'हतशायिकाः शय्यन्ते' इत्यादावपि प्रातिपदिकार्थमात्रे

---

१. अष्टा० २।३।३६; २. तत्रैव—२।३।४७ ।

प्रथमेति प्रोक्तमुद्द्योतकृता, तथैव अनेन नियमेन प्रातिपदिकार्थमात्रे प्रथमेतरद्वितीयादीनां व्यावृत्तिः, अनर्थकनिपातेभ्यश्च स्वौजसमौडिति प्रथमा सिद्ध्यति ।

## [ कर्मप्रवचनीययुक्ते द्वितीया—अष्टा० २।३।८ ]

द्वितीयारूपोपपदविभक्तिविषये नियामकत्वविचारः । तत्र—'कर्मप्रवचनीययुक्ते द्वितीया' इत्यस्य प्रत्ययनियमपक्षे 'द्वितीया चेत् तर्हि कर्मप्रवचनीयद्योत्यसम्बन्ध एव' इत्याकारो नियमो भवति । तत्र 'अन्तराऽन्तरेण युक्ते[१]', 'कालाध्वनोरत्यन्तसंयोगे[२]', 'उभसर्वतसो'[३]रित्यादिविहितद्वितीयाया बाधः प्राप्नोति । अतस्तेषां विधित्वमेवाङ्गीकर्तव्यम्, लाघवात्, विधित्वस्य ज्यायस्त्वाच्च । यदि तु "कर्मप्रवचनीययुक्ते द्वितीया" इत्यस्यार्थनियमः स्वीक्रियते, तदा 'कर्मप्रवचनीययुक्ते विभक्तिश्चेत्तर्हि द्वितीया एव' इत्येवं नियमस्वरूपे द्वितीयातिरिक्तविभक्तिप्रकृतित्वेन कर्मप्रवचनीययुक्तप्रातिपदिकस्य व्यावृत्तावपि द्वितीयाया अनियमनेन अन्तरान्तरेण युक्ते—कालाध्वनोरत्यन्तसंयोगे—उभसर्वतसोरित्यादिस्थलेष्वपि द्वितीयाया अबाधेन स्वौजसमौडित्येव सिद्धौ एषां समेषां नियमत्वम्, तच्च अर्थनियमत्वमेव बोध्यम् । एवञ्च—'अन्तराऽन्तरेण युक्ते प्रातिपदिके प्रकृतिभूते विभक्तिश्चेत्तर्हि द्वितीया एव' अनेन प्रकारेणान्येषामपि नियमाकारः स्वयमूहनीयः ।

उपपदतृतीयाविषये नियमस्वरूपविमर्शः क्रियते । तत्रैकं सूत्रम्—

## [ सहयुक्तेऽप्रधाने—अष्टा० २।३।१९ ]

सूत्रमिदं गृहीत्वाऽऽदर्शरूपेण नियमाकारो विचार्यते—तत्र अर्थनियमपक्षे ( विकल्पात्मकनियमपक्षे ) 'सहयुक्तेऽप्रधाने वर्तमानात् प्रातिपदिकाच्चेत् सुब्विभक्तिस्तर्हि तृतीयैव' इत्येवं रीत्या तृतीयाया अनियमनेनान्यत्राऽपि तस्याः सिद्धौ येनाङ्गविकारः[४], इत्थम्भूतलक्षणे[५], हेतौ[६], अपवर्गे तृतीया[७], प्रकृत्यादिभ्यः उपसंख्यानम्[८] इत्यादिवचनानां नियामकत्वमेव । तच्चार्थनियमत्वमेव, सहयुक्ते इत्यस्य प्रत्ययनियमपक्षे—तृतीया चेत्तर्हि 'सहयुक्तेऽप्रधाने वर्तमानप्रातिपदिकादेव' इति नियमाकारो भवति । ततश्चान्येषु लक्ष्येषु तृतीयाया अप्राप्तौ अन्येषां विधित्वमेवोचितम्, लाघवात् ।

---

१. अष्टा० २।३।४;   २. तत्रैव—२।३।५;   ३. तत्रैव—१।४।४८ वार्तिकम् ।
४. तत्रैव—२।३।२०;   ५. तत्रैव—२।३।२१;   ६. तत्रैव—२।३।२३ ।
७. तत्रैव—२।३।६;   ८. तत्रैव—२।३।१८ वार्तिकम् ।

अथोपपदचतुर्थीविषयको नियमविचारः क्रियते—

## [ नमः स्वस्तिस्वाहा०—अष्टा० २।३।१६ ]

सूत्रस्यास्य अर्थनियमपक्षे 'नमः स्वस्ति-स्वाहा' इत्यादियोगे 'वर्तमानप्रातिपदिकाच्चेत् सुब्विभक्तिस्तर्हि चतुर्थ्येव' इत्याकारे नियमे तादर्थ्ये चतुर्थी[१], क्लृपि सम्पद्यमाने च[२], उत्पातेन ज्ञापिते च[३], तुमर्थाच्च भाववचनात्[४]—इत्यादिवचनानामपि पूर्ववदर्थनियामकत्वमेव, तस्य प्रत्ययनियमपक्षे—'नमः स्वस्ति.....' इत्यादियोगे 'वर्तमानप्रातिपदिकादेव चतुर्थी' इत्याकारो नियमो भवति। तेनान्येषां वचनानां विधित्वमेव। नमः स्वस्ति-तादर्थ्यादिविषयातिरिक्तविषये चतुर्थ्या अप्राप्तिः फलम्। एषु अर्थनियमपक्षे (परिसंख्यात्मकनियमपक्षे) कारकबोधकेतरप्रातिपदिकत्वमुद्देश्यताऽवच्छेदकधर्मव्यापकतयाऽवगन्तव्यम्। यथा 'नमः स्वस्ति.....' इत्यस्योद्देश्यताऽवच्छेदकरूपम्—नमः स्वस्ति—इत्यादियोगे वर्तमानप्रातिपदिकत्वम्। अथवा 'नमः स्वस्ति.....' इत्याद्यन्यतमपदप्रयोज्या या विधेयत्वाख्या विषयता, तन्निरूपिता या उद्देश्यत्वाख्या विषयता, तत्प्रयोजकप्रातिपदिकत्वम् इत्यादिरूपम्। तद्व्यापकं तूक्तमेव। स्वौजसमौडिल्यस्योद्देश्यताऽवच्छेदकं सामान्यतः प्रातिपदिकत्वम्, तस्य व्याप्यत्वेनेदमेव कारकबोधकेतरप्रातिपदिकत्वम्। 'हरये नमः' इत्यादावयं व्याप्यव्यापकभावो द्रष्टव्यः।

उपपदपञ्चमीविषये नियमविषयको विचारः प्रस्तूयते। तत्र अन्यारादितरर्ते०[५], पञ्चम्यपाङ्परिभिः[६], प्रतिनिधिप्रतिदाने च[७], अकर्तरि ऋणे पञ्चमी[८], विभाषा गुणेऽस्त्रियाम्[९], पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्[१०], दूरान्तिकार्थेभ्यो द्वितीया च[११], पञ्चमी विभक्ते[१२], यतश्चाध्वकालनिर्माणं तत्र पञ्चमी[१३]—इत्यादीनि वचनानि पञ्चमीविधायकानि सन्ति। अत्रैषां समेषां वचनानामुद्देश्यताऽवच्छेदकमन्यतमत्वेन संगृह्य तद्व्यापकं रूपं कारकेतरबोधकप्रातिपदिकत्वं च गृहीत्वा तद्रूपाऽवच्छिन्नातिरिक्तत्वेन स्वौजसमौडिल्यस्योद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचं विधाय—'कारकेतरबोधकप्रातिपदिकात् पञ्चमी चेत्तर्हि अन्यारादितरर्ते इत्यादिवचनानाम् उद्देश्यताऽवच्छेदकानाम् अन्यतमत्वाऽवच्छिन्नात् प्रातिपदिकादेव' इति

---

१. अष्टा० १।४।४४ वार्तिकम्; २. तत्रैव—१।४।४४ वार्तिकम्।
३. तत्रैव—१।४।४४ वार्तिकम्; ४ तत्रैव २।३।१५।
५. तत्रैव—२।३।२९; ६. तत्रैव—२।३।१०; ७. तत्रैव -२।३।११।
८. तत्रैव—२।३।२४; ९. तत्रैव—२।३।२५; १० तत्रैव—२।३।३२।
११. तत्रैव—२।३।३५; १२. तत्रैव—२।३।४२; १३ तत्रैव—१।४।३१ वार्तिकम्।

परिसंख्यात्मकनियमपक्षीया व्यवस्था, ततश्चान्यप्रातिपदिकस्य पञ्चमीप्रकृतित्वेन व्यावृत्तिः सिद्ध्यति' इति केषाञ्चन मतम्। तत्तु न शोभनम्, अन्यतमत्वस्य प्रवेशे गौरवात्। अतश्च कस्यचिदेकस्य ईदृशपरिसंख्यारूपं नियामकत्वम्, अन्येषां पूर्ववद्-विधित्वमेव समुचितम्। विकल्पात्मकनियमपक्षे तु पञ्चम्या अनियमनात् समेषामेषां नियामकत्वं निराबाधम्। तत्र प्रत्येकम् उद्देश्यताऽवच्छेदकमादाय 'तदवच्छिन्नात् प्रातिपदिकाच्चेत् सुब्विभक्तिस्तर्हि पञ्चम्येव' इत्येवं नियमाकारो बोद्धव्यः। अस्मिन् पक्षे तत्तदुद्देश्यताऽवच्छेदकाऽवच्छिन्नात् प्रातिपदिकात् पञ्चमीतरविभक्तिव्यावृत्तिः सिद्ध्यति।

अत्रायं विवेकः — विकल्पितपञ्चमीविधायकानां 'विभाषा गुणेऽस्त्रियाम्' 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्', 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्येतेषां सूत्राणां विकल्पात्मकनियमपक्षे नियमशरीरं कीदृशमिति चेत्, उच्यते—'गुणे हेतावस्त्रीलिङ्गे वर्तमानात् प्रातिपदिकात् सुब्विभक्तिश्चेत् तर्हि वैकल्पिकी पञ्चम्येव' अथवा पञ्चमीतृतीयाऽन्यतरैव। पृथगादियोगविशिष्टात् प्रातिपदि-काच्चेत् सुब्विभक्तिस्तर्हि द्वितीयातृतीयापञ्चमीनामन्यतमैव।

'दूरान्तिकेभ्यः प्रातिपदिकेभ्यः साधुत्वाय सुब्विभक्तिश्चेत्तर्हि द्वितीयातृतीया-पञ्चमीनामन्यतमैव' इत्येवं पृथक्-पृथग् नियमाकारः पर्यालोचनीयः।

उपपदषष्ठीविषयकनियमविमर्शः क्रियते। तत्र—'षष्ठी शेषे'[1], 'षष्ठी हेतु-प्रयोगे[2]' 'सर्वनाम्नस्तृतीया च[3]' 'षष्ठ्यतसर्थप्रत्ययेन[4]', 'एनपा द्वितीया'[5], 'दूरान्ति-कार्थैः षष्ठ्यन्यतरस्याम्[6]', 'ज्ञोऽविदर्थस्याकरणे[7]', 'अधीगर्थदयेषां कर्मणि[8]', 'कृञः प्रतियत्ने[9]', 'रुजार्थानां भाववचनानामज्वरेः[10]', 'आशिषि नाथः[11]', 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्[12]', 'व्यवहृपणोः समर्थयोः[13]', 'दिवस्तदर्थस्य[14]', 'विभाषोपसर्गे[15]', 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने[16]', 'कृत्वोऽर्थप्रयोगे कालेऽधि-करणे[17]' इत्येतानि वचनानि उपपदषष्ठीविधायकानि सन्ति। तत्रैतेषाम् उद्देश्य-तावच्छेदकरूपाणि अन्यतमत्वेन गृहीत्वा, तद्व्यापकं च रूपं कारकेतरबोधकप्राति-पदिकत्वं च गृहीत्वा परिसंख्यापक्षे नियमस्वरूपं पर्यालोचनीयम्।

---

१. अष्टा० २।३।५०;   २. तत्रैव—२।३।२६;   ३. तत्रैव—२।३।२७।
४. तत्रैव—२।३।३०;   ५. तत्रैव—२।३।३१;   ६. तत्रैव—२।३।३४।
७. तत्रैव—२।३।५१;   ८. तत्रैव—२।३।५२;   ९. तत्रैव—२।३।५३।
१० तत्रैव—२।३।५४;   ११. तत्रैव—२।३।५५;   १२. तत्रैव—२।३।५६।
१३ तत्रैव—२।३।५७;   १४. तत्रैव—२।३।५८;   १५ तत्रैव—२।३।५९।
१६. तत्रैव—२।३।६१;   १७. तत्रैव—२।३।६४।

तथा हि—शेषे, हेतुप्रयोगे, अतसर्थप्रत्यययोगे, एनबन्तयोगे, दूरान्तिकार्थैर्योगे, ज्ञोऽविदर्थस्य करणरूपशेषे—इत्येवमादिषु च वर्तमानं यत्-यत् प्रातिपदिकम्, तादृशोद्देश्यवृत्ति यत्प्रातिपदिकत्वम्, तदेवैतेषाम् उद्देश्यताऽवच्छेदकं रूपम्। तद्-व्यापकं च रूपम्—कारकेतरबोधकप्रातिपदिकत्वं च (गृहीत्वा परिसंख्यापक्षे) तदेव नियम्यशास्त्रस्य स्वौजसमौडित्यस्य यदुद्देश्यताऽवच्छेदकं प्रातिपदिकत्वम्, तद्व्याप्यम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन सामान्यतः प्रातिपदिकत्वाऽवच्छिन्ने सङ्कोचे कृते सति—'कारकेतरबोधकप्रातिपदिकाच्चेत् षष्ठी, तर्हि शेषादिषु प्रतियोगित्वेन वर्तमानात् प्रातिपदिकादेव' इत्याकारो नियमः सम्पद्यते। तेन च इतर-प्रातिपदिकस्य षष्ठीप्रकृतित्वेन व्यावृत्तिः सिद्धयति। यदि तु—

## [ षष्ठी शेषे—अष्टा० २।३।५० ]

सूत्रस्यास्य यदा परिसंख्यात्मकनियामकत्वम्, तदाऽन्येषां समेषां विधित्व-मेव लाघवादिति पूर्वतनी व्यवस्था न विस्मर्तव्या। विकल्पात्मकनियमपक्षे तु पूर्ववदेव यानि नित्यषष्ठीविधायकानि, तेषाम् उद्देश्यताऽवच्छेदकम् अन्यतमत्वेन पार्थक्येन वा गृहीत्वा नियमस्य स्वरूपं चिन्तनीयम्। यानि तु विकल्पविधायकानि, तत्र प्रत्येकम् एवोद्देश्यतावच्छेदकं गृहीत्वा, तदवच्छिन्नात् प्रातिपदिकाच्चेत् सुब्वि-भक्तिस्तर्हि वैकल्पिकी षष्ठी एव, अथवा षष्ठी द्वितीयान्यतरैव, षष्ठी पञ्चम्यन्यतरैव इत्यादिकं स्वरूपं द्रष्टव्यम्।

अत्रायं विशेषः —'ज्ञोऽविदर्थस्य करणे', 'अधीगर्थदयेषां कर्मणि' इत्यादीनि अष्टौ सूत्राणि प्रतिपदं षष्ठ्या विधायकानि। तत्र 'षष्ठी शेषे' इत्यनेनैव षष्ठ्याः सिद्धत्वाद् इमानि समासाभावप्रयोजनकानि, 'प्रतिपदविधाना षष्ठी न समस्यते' इति ज्ञापनात्।

उपपदसप्तम्या विषये नियमत्वविचारः क्रियते। तत्र—'यस्य च भावेन भावलक्षणम्[1]', 'षष्ठी चानादरे[2]', 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च[3]', 'आयुक्तकुशलाभ्यां चासेवायाम्[4]', 'यतश्च निर्धारणम्[5]', 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः[6]', 'प्रसितोत्सुकाभ्यां तृतीया च[7]', 'नक्षत्रे च लुपि[8]', 'सप्तमीपञ्चम्यौ कारकमध्ये[9]', 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी[10]', 'साध्वसाधुप्रयोगे च[11]', 'निमित्तात्कर्मयोगे'[12] इत्यादीनि वचनानि उपपदसप्तमी-

१. अष्टा० २।३।३७; २. तत्रैव—२।३।३८; ३. तत्रैव—२।३।३९।
४. तत्रैव—२।३।४०; ५. तत्रैव—२।३।४१; ६ तत्रैव—२।३।४३।
७. तत्रैव—२।३।४४; ८. तत्रैव—१।३।४५; ९. तत्रैव—२।३।७।
१०. तत्रैव—२।३।९; ११. तत्रैव—२।३।३६ वार्तिकम्।
१२. तत्रैव—२।३।३६ वार्तिकम्।

विधायकानि सन्ति। तत्र यानि नित्यानि, तेषामुद्देश्यताऽवच्छेदकम् अन्यतमत्वेन गृहीत्वा पूर्ववद् व्यवस्था कर्त्तव्या। यद्यन्यतमत्वप्रवेशे गौरवम्, तदा पूर्ववत् प्रत्येकमेवोद्देश्यताऽवच्छेदकमादाय नियमस्वरूपं दर्शनीयम्। यानि तु विकल्पेन सप्तमीविधायकानि, तेषां पार्थक्येनैवोद्देश्यताऽवच्छेदकमादाय नियमस्वरूपं पर्यालोचनीयम्।

अयं भावः — परिसंख्यापक्षे नित्यानि वैकल्पिकानि च सर्वाणि संगृह्य तेषां उद्देश्यताऽवच्छेदकानि अन्यतमत्वेन मेलयित्वा—कारकेतरबोधकप्रातिपदिकाच्चेत् सप्तमी विभक्तिस्तर्हि—उक्तान्यतमप्रातिपदिकादेवेति नियमस्वरूपं मन्तव्यम्, तत्फलं च उक्तप्रातिपदिकेतरप्रातिपदिकस्य सप्तमीप्रकृतित्वेन व्यावृत्तिः; परन्त्वन्यतमत्वप्रवेशकृतं गौरवं न शोभनमतः प्रत्येकमेवोद्देश्यताऽवच्छेदकं धर्तव्यम्। तत्र कस्यचनैकस्य नियामकत्वं स्वीकृत्य परेषां विधित्वमेवोचितम्। विकल्पात्मकनियमपक्षे तु प्रत्येकम् एवोद्देश्यताऽवच्छेदकं गृहीत्वा प्रातिस्विकरूपेण नियमस्वरूपं द्रष्टव्यम्। यथा—'षष्ठी चानादरे' इत्यत्र 'अनादराधिक्ये भावलक्षणे वर्तमानात् प्रातिपदिकात् सुप् स्यात्तर्हि षष्ठीसप्तम्यन्यतरदेव' इत्यादिकं द्रष्टव्यम्। उपपदविभक्तिविषयको नियमविचारः सुसम्पन्नः।

## [ स्तौतिण्योरेव षण्यभ्यासात्—अष्टा० ८।३।६१ ]

इण्कोरित्यधिकारादिण इति लब्धम्, योग्यताबलात्। अपदान्तस्य मूर्धन्य इत्यस्याप्यधिकारः। "सहेः साडः स—इन्यतः स" इति षष्ठ्यन्तमनुवर्तते। एवं च—'अभ्यासावयवादिणः परस्यापदान्तस्य आदेशरूपस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि' इति सूत्रार्थः सम्पद्यते।

तत्रास्योद्देश्यताऽवच्छेदकं रूपम्—अभ्यासेणः परत्वविशिष्टो यः षभूतसन्परकः स्तौतिण्यन्तयोरपदान्त आदेशरूपः सकारः सद्वृत्ति सत्वम्। तद्व्यापकं च रूपम्—अभ्यासेणः परत्वविशिष्टः षत्वावस्थापन्नसन्परकत्वविशिष्टो योऽपदान्तादेशरूपः सकारः, सद्वृत्ति सत्वम्। आदेशप्रत्यययोरित्यनेन षत्वस्य सिद्धत्वादिदं सूत्रं नियामकम्। नियम्यं सूत्रं च 'आदेशप्रत्यययोः'[1] इति। तदीयोद्देश्यताऽवच्छेदकं रूपम्—इण्कवर्गाभ्यां परो योऽपदान्तादेशरूपः प्रत्ययावयवश्च सकारः, तद्वृत्ति सत्वम्। एतद्व्याप्यं च रूपम्—अभ्यासेणः परत्वविशिष्टः षभूतसन्परकत्वविशिष्टो योऽपदान्तादेशरूपः सकारस्तद्वृत्ति सत्वम्—एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन आदेशप्रत्यययोरिति शास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—'अभ्यासेणः परस्य षभूतसन्परकस्यापदान्तादेशरूपस्य सस्य

1. अष्टा० ८।३।५९;

षत्वं स्यात्, तर्हि तादृशस्य 'स्तौतिण्यन्तयोरवयवस्य सस्यैव' नान्यस्येति। तेन सेक्तुमिच्छति 'सिसिक्षति' इत्यत्र न षत्वम्। स्तोतुमिच्छति तुष्टूषति, साधयितुं इच्छति—सिषाधयिषति इत्यादीन्युदाहरणानि। अभ्यासेण इत्यत्राभ्यासग्रहणस्य फलं प्रतीषिषति। षभूते सनि इत्यस्य फलम्—तिष्ठासति, सिष्णासति इत्यादि।

## [ यथाऽसादृश्ये—अष्टा० २।१।७ ]

असादृश्ये यथाशब्दः समर्थसुबन्तेन सह समस्यते। 'अव्ययं विभक्ति'[1] इत्यनेनैव यथार्थत्वेन समासे सिद्धे नियमार्थमिदम् इति सिद्धान्तकौमुदीकर्तृमतम्। तथा हि—'योग्यता-वीप्सा-पदार्थानतिवृत्ति-सादृश्यानि यथार्थाः' इत्युक्तं मूले कौमुद्याम्। अत्र सादृश्यस्यापि अर्थचतुष्टयमर्थे परिगणनम्।

अत्र सूत्रेऽसादृश्ये इति च्छेदः, अन्यथा 'सादृश्ये यथा' इति ब्रूयात् सूत्रकारः। एवञ्च—'असादृश्ये योग्यता-वीप्सा-पदार्थानतिवृत्त्यन्यतमेऽर्थे वर्तमानो यथाशब्दः समर्थप्रकृतिकसुबन्तेन सह समस्यते' इति सूत्रार्थः सम्पद्यते।

अस्योद्देश्यताऽवच्छेदकं रूपम्—असादृश्यबोधकयथाशब्दत्वम्, तद्व्यापकं रूपम्—सादृश्यासादृश्यान्यतरबोधकयथाशब्दत्वम्। 'अव्ययं विभक्तिसमीप' इत्यादेरुद्देश्यताऽवच्छेदकं रूपम्—सादृश्यासादृश्यान्यतरबोधकम्, यथा—अनु-प्रति-आदि-शब्दत्वम्। तद्व्याप्यं च रूपम्—तदेव 'यद् यथाऽसादृश्ये इत्यस्योद्देश्यताऽवच्छेदकव्यापकम्'। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन सङ्कोचे कृते सति—सादृश्यासादृश्यान्यतरबोधकयथाशब्दः समर्थसुबन्तेन सह समस्यते चेत्, तर्हि असादृश्यबोधक एव' इति नियमाकारः सम्पद्यते। ततश्च सादृश्यार्थकस्य यथाशब्दस्य व्यावृत्तिर्भवति। तेन 'यथा हरिस्तथा हरः' इत्यत्र न समासः।

नियमत्वे मानं तु—प्रतिषेधेति प्रतीकमुपादाय 'यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे सादृश्यप्रतिषेधार्थत्वादस्यारम्भस्य' इति कैयटवचनमेव। अस्मिन् विषये शेखरकारस्य वैमत्यमस्ति। तथा हि—पूर्वसूत्रेण सूत्रगृहीताव्ययेन सह समर्थसुबन्तस्य समासो नेष्यते। 'ततः पश्चात् स्रंस्यते ध्वंस्यते' इति अचः परस्मिन्निति सूत्रे[1] भाष्यकारेण प्रयुक्तत्वात्। यदि सूत्रगृहीताव्ययेनापि सह समासस्तेनेष्येत, तर्हि तस्य समासस्य नित्यत्वाद् भगवान् भाष्यकारो वैकल्पिकं तादृशं लौकिकं विग्रहं स्वपदघटितं न दर्शयेत्।

अतो नियामकत्वापेक्षया सूत्रगृहीतेत्यादिज्ञापकताया एवौचित्यात्। पूर्वसूत्रे यथार्थशब्देन सादृश्यस्याग्रहणाच्च। अत एव तत्र सूत्रे सादृश्यग्रहणस्य चारितार्थ्यम्।

---

१. अष्टा०—२।१।६।

अत एव भगवता 'सादृश्यसम्पत्ति इत्यनेन प्राप्नोति' इत्युक्तम्, न तु यथार्थत्वेन। न च गुणभूतसादृश्यग्रहणार्थं तत्र सादृश्यग्रहणम् इति वाच्यम्, लक्ष्यानुरोधेन प्रधानन्यायाप्रवृत्तेः उभयत्रापि तेन सिद्धेः। यथा योग्यताया यथार्थत्वेऽपि रूपस्य योग्यमनुरूपमित्यादौ तद्वदर्थकेनापि समासस्तद्वत्। पूर्वसूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम्। एवं च 'यथाशक्ति' इत्येतदुदाहरणमेवेति भाष्ये स्पष्टम्। वीप्सादावपि यथाशब्देन समासो भवत्येव। "यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहणम्" इति भाष्यात्। एवं च उपक्रमोपसंहाराभ्यामस्य सूत्रस्य विधित्वं भाष्यादायाति।

अत्र सूत्रे यथाशब्दः स्वरूपपरो न त्वर्थपरः, मानाभावात्। अव्ययमिति सूत्रे तु वचनग्रहणार्थपरता इति विशेषः। एवं चास्य नियामकत्वं भाष्यविरुद्धमिति अवगन्तव्यमिति दिक्।

## [ विभाषा तृतीयादिष्वचि—अष्टा० ७।१।९७ (अवशिष्टपूरणम्) ]

अत्र सूत्रे परिसंख्यारूपो नियमः, अजादौ तृतीयादौ अन्यत्र च तुन्नन्तस्य तृजन्तस्य चोभयोर्विभाषितप्रयोगस्य प्राप्तत्वात्। अस्य वैषम्यस्य सत्त्वेऽपि फलतः प्रयोगनियामकता त्रिसूत्र्यां सम्मता; किन्तु पूर्वप्रसङ्गे एतस्याः त्रिसूत्र्या विषये यद् व्याख्यातम्, तत् सर्वं व्युत्पत्तिवर्धनार्थमेव, न तु सिद्धान्तरूपम्। शसादौ एकस्यैव प्रयोगे प्राप्ते तुन्नन्तस्येव तृजन्तस्यापि केवलस्य प्रयोगापत्तेः। अतः 'तृज्वत्क्रोष्टुः[1]', 'स्त्रियां च[2]' इत्यनयोर्मिलितयोरुद्देश्यतावच्छेदकम्—सर्वनामस्थानङीब्रूपस्त्रीप्रत्ययान्यतरपरत्वविशिष्टक्रोष्टुशब्दान्ताङ्गावयवक्रोष्टुशब्दत्वम्। तद्व्यापकं रूपम्—सुब्विभक्ति-स्त्रीप्रत्ययान्यतरपरत्वविशिष्टक्रोष्टुशब्दान्ताङ्गावयवक्रोष्टुशब्दत्वम्। इदमेव च लोकप्रमाणीयोद्देश्यतावच्छेदकस्य सामान्यतः प्रत्ययाव्यवहितपूर्वत्वविशिष्टतादृशक्रोष्टुशब्दत्वस्य व्याप्यम्। यद्रूपावच्छिन्नातिरिक्तत्वेन तत्र सङ्कोचे सति—सुब्विभक्ति-ङीब्रूपस्त्रीप्रत्ययान्यतरपरत्ववतः क्रोष्टुशब्दान्ताङ्गावयवक्रोष्टुशब्दस्य चेत् तृज्वद्भावस्तर्हि सर्वनामस्थान–ङीब्रूपस्त्रीप्रत्ययान्यतरपरत्वविशिष्टतादृशक्रोष्टुशब्दस्यैव। तेन शसादौ तृज्वद्व्यावृत्तिः सिद्धा।

इदमपि पूर्वव्याख्याने लिखितमेव, पुनः स्मरणार्थमत्रोल्लिख्य वस्तुतः सिद्धान्त उच्यते। स चेत्थम्—'विभाषा तृतीयादिष्वचि' इत्यस्यैव परिसंख्यात्मकनियामकता मन्तव्या। 'तृज्वत्क्रोष्टुः', 'स्त्रियां च' अनयोर्द्वयोस्तु विधायकतैव समीचीना। 'विधिनियमसम्भवे विधिरेव ज्यायान्' इति नियमस्य जागरूकत्वात्। यतो हि—'विभाषा तृतीयादिष्वचि' इत्यनेन प्रयोगद्वयस्य अजादितृतीयादावेवेत्येवं नियमने कृते तत्रैक-

---

१. अष्टा० ७।१।९५;        २. तत्रैव—७।१।९६।

स्यैव कस्यचित् प्रयोगे प्राप्ते सर्वनामस्थाने तुन्नन्तस्य प्रयोगं वारयित्वा तृजन्तस्य प्रयोगो विधेयः। यद्यपि लोकतस्तस्यापि प्राप्तिस्तथापि तुन्नन्तस्य वारणं न स्यादिति फलतो नियामकताऽपीति सर्वं सुस्थम्।

## [ उपमानं शब्दार्थप्रकृतावेव—अष्टा० ६।२।८० ]

अत्र 'बहुव्रीहौ प्रकृत्या पूर्वपदम' इति सूत्रतः पूर्वपदमिति पदमनुवर्तते, 'आदिरुदात्तः' इति सूत्रम् अधिकाररूपेण सम्बध्नाति। 'णिनि' इति पूर्वसूत्रं चानुवर्तते। समासस्वरस्य प्रकरणमिदम्, अतश्चोत्तरपदे इत्यस्यापि आक्षेपादिना सम्बन्धो बोध्यः। 'णिनि' इति सप्तम्यन्तं प्रत्ययपदमस्ति, अतः प्रत्ययग्रहण-परिभाषया तदादिपदं लभ्यते, तद्विशेष्यकस्तदन्तविधिः। 'शब्दार्थप्रकृतौ' इति सप्तम्यन्तस्य योग्यतावशात् णिन्यन्ततदादिभूते उत्तरपद एवान्वयेन 'शब्दार्थकधातुप्रकृतिकणिन्यन्ततदाद्युत्तरपदे पर एव उपमानवाचकं पूर्वपदमाद्युदात्तम्' इति सूत्रार्थः सम्पद्यते। 'उष्ट्र इव क्रोशति तच्छीलः' इति विग्रहे 'कर्तर्युपमाने'[1] इति णिनिप्रत्यये सति 'उपपदमतिङ्'[2] इत्यनेनोपपदसमासे प्रकृतसूत्रेण उपमानवाचिनः पूर्वपदस्योष्ट्रस्यादेः उकारस्योदात्तः क्रियते।

अवशिष्टानामचाम्—'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तविधानं क्रियते। अत्र 'णिनि' इति पूर्वसूत्रेणैव पूर्वपदस्यानुदात्तसिद्धौ नियमार्थमिदम् इति सिद्धान्तः। तत्र नियमस्वरूपं विचार्यते, तत्र नियम्यसूत्रस्य 'णिनि' इत्यस्यार्थः — 'णिन्यन्ततदादिरूपोत्तरपदे पूर्वपदमाद्युदात्तं स्यात्' इति। नियामकसूत्रस्य—'उपमानं शब्दार्थप्रकृतावेव' इत्यस्योद्देश्यताऽवच्छेदकं रूपम्। शब्दार्थकधातुप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदपरकोपमानवाचकपूर्वपदस्याद्यत्वम्। अथवा उपमानवाचकपूर्वपदाव्यवहितोत्तरशब्दार्थकधातुप्रकृतिकणिन्यन्ततदाद्युत्तरपदघटितसमासत्वम्।

एतद्व्यापकं रूपम्—उपमानवाचकपूर्वपदाव्यवहितोत्तरधातुमात्रप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वम्। 'णिनि' इति नियम्यं सूत्रम्। तदीयोद्देश्यताऽवच्छेदकं रूपम्—पूर्वपदाव्यवहितोत्तरधातुमात्रप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वम्। तद्व्याप्यं रूपम्—उपमानवाचकपूर्वपदाव्यहितोत्तरधातुमात्रप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वम्। इदमेव च—नियामकशास्त्रीयोद्देश्यताऽवच्छेदकरूपस्य व्यापकमपि। अत एतन्मध्यपातिरूपाऽवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—उपमानवाचकपूर्वपदाव्यवहितोत्तरधातुमात्रप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वावच्छिन्ने उपमानवाचकपूर्वपदस्याद्युदात्तता चेत्, तर्हि—उपमान-

१. अष्टा० ३।२।७९; २. तत्रैव—२।२।१९।

वाचकपूर्वपदाव्यवहितोत्तरशब्दार्थकप्रकृतिकणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमा - सत्वम् । तेन वृक इव वञ्चति 'वृकवञ्ची' इत्यत्र न आद्युदात्तप्रवृत्तिः ।

नियामकसूत्रे 'शब्दार्थप्रकृतावेव' इत्येवकारग्रहणेन 'शब्दार्थप्रकृतिकणिन्यन्तोत्तरपदे उपमानवाचकस्यैव आदेरच उदात्तो भवतीति विपरीतनियमाभावः, तेन मधुरं रौति 'मधुररावो' इत्यत्र 'णिनि' इति नियम्यसूत्रेण पूर्वपदस्यादिरुदात्तो भवत्येव ।

## [ युक्तारोह्यादयश्च—अष्टा० ६।२।८१ ]

युक्तादीनि पूर्वपदानि आद्युदात्तानि स्युः, आरोह्यादिषु उत्तरपदेषु परतः । इति सूत्रार्थः । युक्तारोह्यादिगणे यानि णिन्यन्तानि उत्तरपदानि तेषु 'णिनि' इति सूत्रेणैवाद्युदात्ते सिद्धे नियमार्थमिदं सूत्रम् । तत्रादसीयमुद्देश्यताऽवच्छेदकं रूपम्—आरोहिरूपणिनिप्रत्ययान्ततदाद्युत्तरपदाव्यवहितपूर्व-युक्तरूपपूर्वपदाद्यच्त्वम् । 'णिनि' इति नियमसूत्रीयमुद्देश्यताऽवच्छेदकम्—णिनिप्रत्ययान्ततदाद्युत्तरपदाव्यवहितपूर्वपूर्वपदाद्यच्त्वम् । तद्व्याप्यं रूपम्—आरोहिरूपोत्तरपदाव्यवहितपूर्व-पूर्वपदाद्यच्त्वम् । इदमेव मध्यपातिरूपम् । एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन णिनि-सूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—आरोहिरूपोत्तरपदपरकपूर्वपदस्यादिरुदात्तश्चेत्,तर्हि उक्तोत्तरपदपरकयुक्तरूपस्यैव पूर्वपदस्य । तेन 'मुक्तारोही' इत्यादौ न भवति पूर्वपदस्याद्युदात्तता । एतावति नियमे स्वीकृतेऽपि 'युक्तश्लाघी' इत्यादीनां व्यावृत्तिर्न भवति । अतोऽत्र द्वेधा नियमः स्वीक्रियते । स च द्वितीयो नियमाकार इत्थं बोध्यः । युक्तरूपपूर्वपदाव्यवहितोत्तरारोहिरूपोत्तरपदघटितसमासत्वम् । तद्व्यापकं रूपम्—युक्तरूपपूर्वपदाव्यवहितोत्तरयत्किञ्चिद्-णिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वम् ।

'णिनि' इति नियम्यं सूत्रम्, तदुद्देश्यताऽवच्छेदकं रूपम्—सामान्यतः पूर्वपदाव्यवहितोत्तरणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासत्वम् । तद्व्याप्यं रूपम्—युक्तरूपपूर्वपदाव्यहितोत्तरणिनिप्रत्ययान्ततदाद्युतरपदघटितसमासत्वम् । इदमेव मध्यपातिरूपम् । एतद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यसूत्रीयोद्देश्यताऽवच्छिन्ने सङ्कोचे कृते सति—युक्तरूपपूर्वपदोत्तरणिनिप्रत्ययान्ततदाद्युत्तरपदघटितसमासे युक्तरूपपूर्वपदस्याद्युदात्तता चेत्, तर्हि युक्तरूपपूर्वपदोत्तरारोहिरूपोत्तरपदघटितसमास एव । तेन युक्तश्लाघी इत्यादीनामपि व्यावृत्तिः सिद्ध्यति । एवमेव—आगतरोही, आगतनन्दी, आगतप्रहारी–इत्यादिषु गणपठितेषु णिन्यन्तोत्तरपदकसमासेषु द्वेधा नियमव्यवस्था बोध्या ।

## [ कारकाद्दत्तश्रुतयोरेवाशिषि—अष्टा० ६।२।१४८ ]

भगवता भाष्यकृताऽत्र सूत्रे कारकादिति योगो विभाजितः। तत्र गति-कारकोपपदात् कृदित्यतो गतिग्रहणम्, 'सूपमानात् क्तः' इत्यतः क्तपदं चानुवर्त्य, 'आदिरुदात्तः' इत्यत उदात्त इति पदम्, 'अन्तः' इति सूत्र चाधिकृत्यास्यार्थः कृतोऽस्ति—कारकात् परं गतिपूर्वपदं क्तान्तं तदादि अन्तोदात्तं स्यात्। तत्र क्त इति प्रत्ययस्तेन तदादिपदोपस्थापनद्वारा तदन्तग्रहणं भवति। गति इत्यस्य तु योग्यताबलात् क्तान्ततदादेः पूर्ववर्तितया पूर्वपदत्वं फलितम्।

अस्तु—'थाथघञ्क्ताजबित्रकाणाम्' इत्यनेनैवान्तोदात्तसिद्धौ अयं विभक्तो योगो नियामकः। गतिपूर्वपदकं क्तान्तं तदादि अन्तोदात्तं चेत्, तर्हि कारकादेव परम्, नान्यस्मात्। तत्फलं च अभ्युद्धृतामित्यत्राभेः परस्योद्रूपपूर्वपदकहृतरूप-क्तान्तस्य थाथेति सूत्रेणान्तोदात्तत्वाभावः सिद्ध्यति। अत्र नियामकं शास्त्रम्—कारकादिति विभक्तं सूत्रम्। तदीयोद्देश्यताऽवच्छेदको धर्मः — गतिपूर्वपदक-क्तान्ततदाद्युत्तरपदाव्यवहितपूर्वकारकसंज्ञकपूर्वपदघटितससासत्वम्। तद्व्यापको धर्मः — गतिपूर्वपदकक्तान्ततदाद्युत्तरपदाव्यवहितपूर्वकारकसंज्ञक – तदितरान्यतरपूर्वपदघटित-समासत्वम्।

नियम्यं सूत्रम्—'थाथघञ्क्ताजबित्रकाणाम्' इति। तदुद्देश्यताऽवच्छेदको धर्मः -- थाथादिप्रत्ययान्ततदाद्यव्यवहितपूर्वगतिकारकोपपदान्यतमपूर्वपदघटितसमास-त्वम्। तद्व्याप्यश्च धर्मः — गतिपूर्वपदकक्तान्ततदाद्यव्यवहितपूर्वकारकतदि-तरान्यतरपूर्वपदघटितसमासत्वम्। इदमेव मध्यपातिरूपम्। एतद्रूपावच्छि-न्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—गतिपूर्वपदक्तान्ततदाद्यव्यवहितपूर्वकारकतदितरान्यतरपूर्वपदघटितसमासत्वाऽवच्छिन्ने क्तस्यान्तोदात्तता चेत्, तर्हि गतिपूर्वपदकक्तान्ततदाद्यव्यवहितपूर्वकारकपूर्वपद-घटितसमास एव। तत्फलं तु अभ्युद्धृतमित्यत्रोद्धृतरूपगतिपूर्वपदकक्तान्तस्यान्तो-दात्तत्वाभावः, कारकात्परत्वाभावात्।

अयं नियम्यनियामकभावो भाष्यकृत्सम्मत्या निरूपितः, "कारकाद्दत्तश्रुत-योरेवाशिषि' इति प्रकृतसूत्रे एवशब्दं गृह्णतः सूत्रकारस्य मते तु अन्यादृश एव नियमाकारः, तथा हि—कारकात् परयोर्दत्तश्रुतयोरन्त उदात्तः स्यात् संज्ञायामा-शिषि। देवदत्तः, विष्णुश्रुतः। कारकात् किम्? सम्भूतं रामायणम्। दत्तश्रुतयोः किम्? देवपालितः। अस्मान्नियमादत्र संज्ञायामनेति न। तृतीया कर्मणि इति तु भवति। एव किम्? कारकाऽवधारणं यथा स्याद् दत्तश्रुतावधारणं मा भूत्। अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति, संश्रुतः। आशिषि किम्? देवैः खाता,

देवखाता। आशिष्येवेत्येवमत्रेष्टो नियमः। तेनानाहृतो नदति देवदत्त इत्यत्र न। शङ्खविशेषस्य संज्ञेयम्। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वमेव भवति।

अस्तु--नियामकस्य कारकाद्दत्तेति प्रकृतसूत्रस्योद्देश्यताऽवच्छेदकं रूपम्—कारकाव्यवहितोत्तरदत्तश्रुतान्यतरक्तान्ततदाद्युत्तरपदघटितसमासत्वम्। तद्व्यापकं रूपम्—कारकपूर्वपदकक्तान्ततदाद्युत्तरपदघटितसमासत्वम्, तादृशक्तान्ततदाद्युत्तरपदान्त्याच्त्वं वा। नियम्यं सूत्रम्—'संज्ञायामनाचितादीनाम्' इति। तदीयोद्देश्यतावच्छेदकं रूपम्--गतिकारकोपपदान्यतमाव्यवहितोत्तरक्तान्ततदाद्यन्त्याच्त्वम्। तद्व्याप्यं च रूपम्—कारकाव्यवहितोत्तरक्तान्ततदाद्यन्त्याच्त्वम्। इदमेव मध्यपातिरूपम्। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन नियम्यसूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—कारकाव्यवहितोत्तरक्तान्ततदादेः अन्त्याच्च उदात्तश्चेत्, तर्हि कारकोत्तरदत्तश्रुतरूपक्तान्ततदादेः अन्त्याच एव। तेन देवपालित इत्यत्र 'संज्ञायामनाचितादीनाम्' इति सूत्रेणान्तोदात्तो न भवति। दत्तश्रुतयोरेवेत्येवकारेण कारकादेवेति विपरीतनियमाभावः, तेन संश्रुत इत्यत्राकारकादपि श्रुतशब्दस्यान्त उदात्तो भवति। आशिष्येवेत्येवं नियमेन शङ्खवाचकस्य देवदत्तशब्दस्यानेनान्तोदात्तो न भवति।

## [ ह्रस्वान्तेऽन्त्यात् पूर्वम्—अष्टा० ६।२।१७४ ]

ह्रस्वः अन्ते यस्य तदिदं ह्रस्वान्तमिति बहुव्रीहेः अन्यपदार्थत्वेनोत्तरपदं समासो वा गृह्यते। नञ्सुभ्यामिति सूत्रम्। कपि पूर्वमिति चानुवर्तते। उदात्त इति चाधिकृतमस्ति। अतश्च सूत्रार्थः सम्पद्यते—ह्रस्वान्ते उत्तरपदे समासे वाऽन्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ। अव्रीहिकः, सुमाषकः। पूर्वम् इत्यनुवर्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमार्थम्—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं न कपि पूर्वमिति। अज्ञकः। कबन्तस्यैवान्तोदात्तत्वम्। नास्ति ज्ञा यस्येति 'अज्ञकः'। अत्र यद्येष नियमो न स्यात्, तर्हि एतस्याभावे 'कपि पूर्वम्' इत्ययमेव स्वरः स्यात्। अस्मिंस्तु नियमे सति न भवति, नञ्सुभ्यामिति कबन्तस्यैव भवति।

अस्तु—अस्य नियामकसूत्रस्योद्देश्यताऽवच्छेदकरूपं विचार्यते—अत्र प्रथमेन वाक्येन ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते। द्वितीयेन वाक्येन नियम्यते—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तत्फलं तु 'अज्ञकः' इत्यत्र कबन्तस्यैव नञ्सुभ्यामित्यनेनान्तोदात्तत्वं भवति।

अदसीयमुद्देश्यताऽवच्छेदकं रूपम्—बहुव्रीहिसमासघटक-न-सु-इत्येतदन्यतराव्यवहितोत्तरं कप्प्रत्ययपरकं यदुत्तरपदं तदन्त्यावधिकपूर्वत्वविशिष्टमच्त्वम्।

एतद्व्यापकं रूपम्--'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्यस्य, 'कपि पूर्वम्' इत्यस्य चोद्देश्यताऽवच्छेदकद्वयम्। नियम्यं सूत्रम्--'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति प्रथमवाक्यम्, 'कपि पूर्वम्' इति च। वाक्यभेदसामर्थ्याद् व्यवहितस्य 'कपि पूर्वम्' इत्यस्याऽपि नियमनमन्यथा एकमेव वाक्यं स्यात्।

अथ च नियम्यसूत्रद्वयीयमुद्देश्यताऽवच्छेदकम्—बहुव्रीहिसमासघटक-नञ्-सु-इत्येतदन्यतरपूर्वपदकं कप्प्रत्ययपरकम् यदुत्तरपदं तदन्त्यावधिकपूर्वत्वविशिष्टमच्त्वम्, बहुव्रीहिसमासघटक-नञ्-सु-इत्येतदन्यतराव्यवहितोत्तरं यत् कप्प्रत्ययपरकमुत्तरपदं तस्यान्त्याच्त्वम्, इत्येतदन्यतमम्। एतद्व्याप्यं रूपम्--एतत्सूत्रद्वयीयमुभयत्वाऽवच्छिन्नमुद्देश्यताऽवच्छेदकद्वयम्। एतद्रूपमेव मध्यपातिरूपम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन उक्तान्यतराऽवच्छिन्ने सङ्कोचे कृते सति उक्तोद्देश्यतावच्छेदकद्वयावच्छिन्ने उदात्तस्वरश्चेत्, तर्हि--बहुव्रीहिघटक-नञ्-सु-इत्येतदन्यतराव्यहितोत्तरं कप्प्रत्ययपरकं यदुत्तरपदं तदन्त्यावधिकपूर्वत्वविशिष्टस्याच एव। तेन 'अज्ञकः' इत्यत्र कबन्तस्यैवान्तोदात्तत्वम्, न तु कपि पूर्वमित्यनेन कपः पूर्वस्याकारस्येति निष्कर्षः।

## [ कारनाम्नि च प्राचां हलादौ—अष्टा० ६।३।१० ]

अत्र 'हलदन्तात् सप्तम्याः संज्ञायाम्' इति सूत्रं सम्पूर्णमनुवर्तते। 'अलुगुत्तरपदे' इत्यस्य चाधिकार आयाति। एवं च—"प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक् स्यात्" इति सूत्रार्थः सम्पद्यते। मुकुटे कार्षापणम्, दृषदि माषकः। पूर्वेण सिद्धे नियमार्थमिदम्—कारनाम्न्येव, प्राचामेव, हलादावेवेति। कारनाम्नि किम्? अभ्यर्हितपशुः। कारादन्यदेतद्देयस्य नाम। प्राचां किम्? यूथपशुः। हलादौ किम्? अविकटो रणः। हलदन्तात् किम्? नद्यां दोहो नदीदोहः। इति सिद्धान्तकौमुदी।

पूर्वेण सिद्धे नियमार्थमिदम्—पूर्वेण हलदन्तात् सप्तम्याः संज्ञायाम् इत्यनेन सप्तम्या अलुकि सिद्धे नियमार्थमिदं सूत्रम्। अदसीयोद्देश्यताऽवच्छेदको धर्मः — प्राच्यदेशीया करस्य संज्ञा गम्यमाना चेत् तर्हि हलाद्युत्तरपदाव्यवहितपूर्वहलन्तादन्तान्यतरप्रकृतिकत्वविशिष्टा या सप्तमी तद्वृत्तिसप्तमीत्वम्। एतस्य व्यापको धर्मः — प्राच्योदीच्यदेशीया करस्य या संज्ञा तत्र हलाद्युत्तरपदाव्यवहितपूर्वहलन्तादन्तान्यतराव्यवहितोत्तरा या सप्तमी, तद्वृत्ति सप्तमीत्वम्।

नियम्यं सूत्रम्—'हलदन्तात्सप्तम्याः संज्ञायाम्'[1] इति। तदीयोद्देश्यतावच्छेदको धर्मः —संज्ञायां हलन्तादन्तान्यतरप्रकृतिकसप्तमीत्वम्। तद्व्याप्यो धर्मः —

1. अष्टा० ६।३।९।

हलाद्युत्तरपदाव्यवहितपूर्व-हलन्तादन्तान्यतरप्रकृतिकसप्तमीत्वम्, प्राच्योदीच्यदेशीय-संज्ञायाम्। एतद्रूपावच्छिन्नातिरिक्तत्वेन 'हलदन्तात्सप्तम्याः' इत्यत्र सङ्कोचे कृते सति प्राच्योदीच्योभयदेशीयायां करस्य संज्ञायां हलाद्युत्तरपदाव्यवहितपूर्व-हलन्तादन्तान्यतरप्रकृतिकसप्तम्या अलुक् चेत्, तर्हि प्राच्यदेशीयायामेव करस्य संज्ञायाम्। तेन 'यूथपशुः' इत्यत्र नालुक्, उदीच्यदेश एतत् करस्य संज्ञा।

एवमेव—प्राच्यदेशीयायां करस्य तद्भिन्नस्य वा संज्ञायां हलाद्युत्तर-पदाव्यवहितपूर्व-हलन्तादन्तान्यतरप्रकृतिकसप्तमी-वृत्तिसप्तमीत्वं मध्यपातिरूपम्। तथा—प्राच्यदेशीयकरस्य संज्ञायां हलाद्यजाद्यन्यतरोत्तरपदाव्यवहितपूर्वहलन्ता-दन्तान्यतरप्रकृतिकसप्तमीवृत्तिसप्तमीत्वमपि मध्यपातिरूपम्। तत्तद्रूपाऽवच्छिन्ना-तिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे सति—करस्य संज्ञायामेव, हलादावेवोत्तरपदे परे सप्तम्या अलुक् स्यात्। तथा सति 'अभ्यर्हित-पशुः', 'अविकटो रणः' इत्यादौ नालुक्। एवं च त्रिविधोऽत्र नियमः, स च परिसंख्यारूप एव। न तु विकल्पात्मकः।

## [ ह्रस्वनद्यापो नुट्—अष्टा० ७।१।५४ ]

अत्र नुडिति प्रथमो योगः। 'नद्यापः' इति च द्वितीयो योगः। तत्र 'सामान्यतोऽ-ङ्गात्परस्यामो नुट्' इति प्रथमेन सिद्धेऽयं द्वितीयो योगो नियमार्थः, दीर्घान्ताच्चेत् तर्हि नद्याप एवेति नियमेन दीर्घे न दोषः। हलन्ताच्चेत् तर्हि षट्चतुर्भ्य एवेति हलन्तेषु न दोषः। एवं च ह्रस्वग्रहणं न कार्यमिति पूर्वपक्षरूपेणोक्तं शब्देन्दुशेखरकृता। तत्रोत्तर-पक्षरूपेणास्य नियमस्य प्रत्याख्यानमपि कृतम्। तथा हि—'नद्याप' इत्यस्य स्त्री-लिङ्गानां चेन्नद्याप एवेति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन नदीत्वाप्त्वयो-र्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च 'मतीनाम्' इत्यादौ नुडनापत्तिः स्यादिति।

अत्र पूर्वपक्षस्यायमाशयः — 'नद्यापः' इत्यस्यायमर्थः —नद्यन्ताबन्ततदाद्यन्ता-ङ्गाव्यवहितोत्तरस्यामो नुडागमः स्यादिति। अदसीयोद्देश्यताऽवच्छेदकं रूपम्—नद्यन्तम् आबन्ततदाद्यन्तं च यद ङ्गं तदव्यवहितोत्तरत्वविशिष्टाम्त्वम्।

तद्व्यापकं च रूपम्—दीर्घान्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वम्। नियम्यं शास्त्रं नुडिति। तदीयोद्देश्यतावच्छेदकं सामान्यतोऽङ्गाव्यवहितोत्तरत्वविशिष्टा-म्त्वम्।

तद्व्याप्यं च रूपम्—दीर्घान्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वम्। इदं मध्यपातिरूपम्। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन नुडिति नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—दीर्घान्ताङ्गात् परस्यामो नुट् चेत् तर्हि नद्यन्तावन्ततदाद्यन्ताङ्गात्परस्याम एव। तेन विश्वपा आमित्यादौ न नुट्। एवमेव षट्चतुर्भ्यश्चेत्यपि नियामकम्। तत्रोद्देश्यताऽवच्छेदकं षट्संज्ञकान्तमङ्गं चतुःशब्दान्तं च यदङ्गं ततः परत्वविशिष्टमाम्त्वम्, तद्व्यापकं रूपम्—हलन्ताङ्गात्परत्वविशिष्टमाम्त्वम्, तद्रूपाऽवच्छिन्नातिरिक्तत्वेन नुडिति सूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे सति—हलन्ताङ्गात्परस्यामो नुट् चेत् तर्हि षट्-चतुःशब्दान्ताङ्गात्परस्याम एव। एवं च ह्रस्वग्रहणं व्यर्थमिति।

अथ चोत्तरपक्षस्यायमाशयः — 'नद्याप' इत्यस्योद्देश्यताऽवच्छेदकव्यापकं रूपम्—स्त्रीलिङ्गीयशब्दान्ताङ्गात् परत्वविशिष्टमाम्त्वमित्यपि भवितुमर्हति। ततश्च स्त्रीलिङ्गाङ्गात् परस्यामो नुट् चेत्, तर्हि नद्यन्तावन्ताङ्गात्परस्याम एवेति सङ्कोचेन मतीनामित्यादौ नुट् न स्यादिति महदनिष्टं प्रसज्येत।

## [ आकडारादेका संज्ञा—अष्टा० १।४।१ ]

किमर्थमिदमुच्यते—अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम्, अन्यत्र संज्ञासमावेशो भवति, क्वान्यत्र ?, लोके व्याकरणे च। लोके तावत्—'इन्द्रः, शक्रः, पुरुहूतः, पुरन्दरः। कन्दुः, कोष्ठः, कुसूलः' इति, एकस्य शब्दस्य बहवः संज्ञा भवन्ति। व्याकरणेऽपि—कर्तव्यं हर्तव्यम् इत्यत्र प्रत्यय-कृत्-कृत्य-संज्ञानां समावेशो भवति। पाञ्चालः, वैदर्भः, वैदेह इत्यत्र प्रत्यय-तद्धित-तद्राजसंज्ञानां समावेशो भवति। अन्यत्र संज्ञासमावेशादेतस्मात् कारणाद् आकडारादपि संज्ञानां समावेशः प्राप्नोति। इष्यते चैकैव संज्ञा स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यतीति नियमार्थं वचनम्। एवमर्थमिदमुच्यते। अनया भाष्योक्त्या संज्ञासमावेशवारणाय नियमार्थमेतत्सूत्रं भविष्यतीत्यायातम्।

अत्र प्रदीपकारेण श्रीकैयटोपाध्यायेनोच्यते—किमर्थमिति आकडारात् परा निरवकाशा च संज्ञेष्यते। तत्रान्तरेणापि सूत्रं 'विप्रतिषेधे परं कार्यम्[1]' इति वचनात् परा भविष्यति। न पूर्वा, निरवकाशाऽपि हि सावकाशां विशेषविहितत्वादेव बाधित्वा भविष्यति, कौण्डिन्ये दधिदानमिव तक्रदानमिति प्रश्नः। अन्यत्रेति। विप्रतिषेधे परं कार्यम् उच्यते। न च संज्ञानां विरोधः, युगपत्प्रवृत्तिसम्भवात्। न च बाध्यबाधकभावः, भिन्नफलत्वात्, विरोधाभावाच्च। दधितक्रयोरभिन्नं फलमोदनसेक

१. अष्टा० १।४।२।

इति तयोर्बाध्यबाधकभावः। अस्तु—एतावता भाष्य-प्रदीपयोर्व्याख्यानेनास्य सूत्रस्य नियामकत्वं निश्त्रप्रचम् ; किन्तु तन्न परिसंख्यारूपम्, अपि तु पाक्षिके सति नियामकत्वम्।

अनेकासामाकडारीयसंज्ञानां युगपत्प्राप्तौ 'एकैव' इति नियम्यते। तत्र अनेकसंज्ञाभिरपि प्रयोगसाधुत्वं प्राप्तम्। अस्यां विकल्पस्थितौ इदं सूत्रं नियमयति यदेकयैव संज्ञया कृतं साधुत्वं प्रामाणिकम्, पुण्यजनकताऽवच्छेदकं चास्तीति। यथा—'गां दोग्धि पयः' इत्यत्र अकथितं चेत्यस्य प्रत्याख्यानपक्षे अपादानसंज्ञायाः, कर्तुरित्यनेन कर्मसंज्ञायाश्च प्राप्तौ एकैवेति नियमेन कर्मसंज्ञैव भवति, परत्वात्।

ननु एकसंज्ञाभवने यदि परत्वं हेतुरुच्यते, तर्हि विप्रतिषेधे परं कार्यम् इति सूत्रेणैवेष्टसिद्धौ एतन्नियमसूत्रं व्यर्थमिति चेत्, उच्यते—'विरोधाद्यभावेन विप्रतिषेध-सूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था' इत्येवं लघुशब्देन्दुशेखरे कृतं समाधानं द्रष्टव्यम्। अपादानकर्मणोः समावेशे तु तत्कार्ययोः पञ्चमीद्वितीययोः पर्यायापत्तिः स्यात्। एवमेव अनवकाशाया उदाहरणम्—भसंज्ञा इति। अनवकाशयाऽनया पदसंज्ञाया बाधः। द्वयोः समावेशे तु राज्ञ इत्यादौ नलोपस्यापत्तिः प्रसज्येत। बाध्यसामान्यचिन्तयाऽपवादत्वेनैव समानावधिकाया अन्तरङ्गायाः सुप्तिङन्तम् इति पदसंज्ञाया अपि बाधोऽनया भसंज्ञया भवति, तेन राजन्य इत्यादौ पदत्वप्रयुक्तनलोपाभावः सिद्ध्यतीति शम्।

[ क्रमशः ]



# श्रीमदप्पय्यदीक्षितस्य न्यायरक्षामणिः*

**प्रो० पी० रामचन्द्रडुः**

आचार्यचरः, संस्कृतविभागस्य

उस्मानिया-विश्वविद्यालये

❀ ❀ ❀

श्रीमानप्पय्यदीक्षितः षोडश्यां क्रैस्तवशताब्द्याम्, न केवलं द्रविडदेशे सर्वस्मिन्नपि भारते देशे विश्रुतोऽखण्डपाण्डितीमण्डितो विद्वन्मणिरासीत् । जगद्विख्यातो वैयाकरणः श्रीमान् भट्टोजिदीक्षितोऽप्पय्यदीक्षितात् किल अध्यात्मविद्यामध्यैष्ट । तन्त्रसिद्धान्तदीपिकायां स अप्पय्यदीक्षितम् एवं तुष्टाव --

**अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।**
**यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजनोपाधी ॥** इति ।

सर्वतन्त्रस्वतन्त्रस्य अप्पय्यदीक्षितस्य वैदुष्यं सर्वत्रापि भारते देशे विशेषतश्च दक्षिणदेशे, तस्य जीवनकाल एव प्रसिद्धमभवत् । तस्य भ्रातुः पौत्रो वक्रोक्तिभरितकाव्यरचनाचणो नीलकण्ठदीक्षितोऽप्पय्यदीक्षितस्येमां कीर्तिम् एवं वर्णयति--

**यं विद्म इति यद्ग्रन्थानभ्यस्यामोऽखिलानिति ।**
**यस्य शिष्याः स्म इति च श्लाघन्ते स्वं विपश्चितः ॥** इति ।

अद्वैतसिद्धान्तसमर्थकस्य, सर्वदेवाभेददर्शिनोऽपि अप्पय्यदीक्षितस्य परमशिवाराधने महती निष्ठा अभिरुचिश्चासीत्, यथोक्तं तेनैव—

**महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ।**
**न भेदलेशप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥** इति ।

तस्मिन् काले दक्षिणदेशे विजृम्भमाणानां वैष्णवानामौद्धत्यं निरोद्धुकामोऽप्पय्यदीक्षितः शिवपारम्यं स्थापयितुं नैकान् ग्रन्थान् जग्रन्थ । श्रुतिषु पुराणेषु च बहुधा प्रतिपादितं शिवस्य पारम्यम् अनङ्गीकुर्वद्भिः कैश्चिद् निरूढशिवद्वेषैः पण्डितंमन्यैः प्रतिपाद्यमानां तस्य जीवताम्, विष्णोरेव पारम्यं चासहमानः

---

* निबन्धोऽयं विदुषा लेखकेनाचार्यश्रीबदरीनाथशुक्लस्मृतिव्याख्यानमालायां पठितः ।

अप्पय्यदीक्षितः स्वयंकृतव्याख्यायां षष्टिश्लोकात्मिकायाम् आनन्दलहर्यां विष्णोर्जीवत्वं प्रतिपादयितुं नैकप्रमाणोपबृंहिता युक्तीः प्रादर्शयत्। अन्ते च आनन्दलहर्याः पञ्चत्रिंशत्तमश्लोकस्य व्याख्यायां स्वसिद्धान्तं विवृण्वन् एवमलिखत्—"..... निश्चितपरब्रह्मभावस्य सद्भिः सर्वैरप्यविभागेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित् कोणे निविष्टमन्त्रार्थवादपुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते। तथा चेन्मूर्धा शतधा भवति, वैदिकद्रोहो नारायणद्रोहश्च जायते। अतो नारायणः परब्रह्मकोटिरित्येवास्माकं सिद्धान्तः" इति।

वरदराजस्तव-तद्व्याख्यादिनिर्मातुः अङ्गीकृताद्वैतसिद्धान्तस्य च अप्पय्यदीक्षितस्य विष्णुद्वेषः स्वप्नेऽप्यसम्भाव्यः, केवलं शिवनिन्दकानां वादान् व्युदसितुमेव तस्य सर्वेऽपि यत्नाः, यत्र तेन सुमहत् साफल्यमलम्भि। अत एवायमेवाहान्यत्रापि—

**विष्णुर्वा शङ्करो वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमि-**
**र्नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम्।**
**किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां दुरुक्ती-**
**र्भङ्क्तुं यत्नो ममायं न हि भवति (तु) ततो विष्णुविद्वेषशङ्का॥** इति।

श्रीमता अप्पय्यदीक्षितेन अल्पप्रमाणाः, बृहत्प्रमाणाश्च चतुरुत्तरशतं ग्रन्था निर्मिताः। अत एवास्य "चतुरधिकशतप्रबन्धनिर्वाहकः" इति बिरुदमासीत्। तेष्वद्य षष्टिरेव उपलभ्यते। पूर्वोत्तरमीमांसयोः असदृशपाण्डितीमण्डितोऽसौ अलङ्कारशास्त्रसम्बद्धां 'कुवलयानन्द', 'चित्रमीमांसा', 'वृत्तिवार्तिकम्' इति ग्रन्थत्रयीं जग्रन्थ। एतन्निर्मिता इमे वेदान्तशास्त्रग्रन्था अद्योपलभ्यन्ते—(१) **शास्त्रसिद्धान्तलेशसंग्रहः**, (२) **न्यायरक्षामणिः**, (३) **कल्पतरुपरिमलः**, (४) **मध्वतन्त्रमुखमर्दनम्**, (५) तद्व्याख्या—**मध्वमतविध्वंसनम्**, (६) **पूर्वोत्तरमीमांसावादनक्षत्रमाला** (अस्या एव नाम "**नक्षत्रवादावली**" इति, (७) **चतुर्मतसारसंग्रहः**, (८) **शिवार्कमणिदीपिका** च।

"**शिवार्कमणिदीपिका**" शिवविशिष्टाद्वैतस्थापकस्य नीलकण्ठाचार्यस्य ब्रह्मसूत्रभाष्यस्य अतीवविस्तृता व्याख्या। इमां च व्याख्याम् अप्पय्यदीक्षितः स्वाश्रयदातुः चिनबोम्मनायकाख्यस्य राज्ञः प्रार्थनया अरचयत्। अत्र अप्पय्यदीक्षितेन प्रदर्शितो नैकपुराणादिपरिचयो नितराम् आश्चर्यं तनोति पठितॄणाम्। अप्पय्यदीक्षितः स्वयमेवेमां व्याख्यां विदुषां पञ्चशतीं पाठयामास। वैष्णवमतप्रतिस्पर्धितया शैवमत-

समुद्धरणे बद्धदीक्षः स राजा तेभ्यः सर्वेभ्यो विद्वद्भ्य आवासादिकं किल उपकल्पयामास। अद्वैतवादिनोऽप्यात्मनोऽस्या व्याख्याया निर्माणे प्रवृत्तिं समर्थयन्नप्पय्यदीक्षितो व्याख्यायाः प्रारम्भे लिखति—

यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः पुराणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः।
तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव ॥

तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः।
अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥ इति ।

एवं सकलशास्त्रपारदृश्वनः, अद्वैतविद्याचार्यस्य अप्पय्यदीक्षितस्य वेदान्तग्रन्थेषु प्रथमपरिगणनीयस्य न्यायरक्षामणेर्वैशिष्ट्यं स्थालीपुलाकन्यायेन द्वित्रोदाहरणप्रदर्शनपूर्वकं प्रतिपाद्यते ।

**न्यायरक्षामणिः** ब्रह्मसूत्राणां प्रथमाध्यायस्य शङ्करभगवत्पादभाष्यानुसारिणी व्याख्या। अत्र भगवत्पादानां भाष्यविषये रामानुज-श्रुतप्रकाशिकाकारादिभिर्विशिष्टाद्वैतिभिर्ये वा आक्षेपाः कृतास्तेषां समाधानम्, तेषां नामान्यनिर्दिश्यैव, कृतमप्पय्यदीक्षितेन। सर्वासामुपनिषदाम् अद्वितीये ब्रह्मण्येव तात्पर्यमिति विवक्षितोऽर्थो ब्रह्मसूत्राणाम् । यदुक्तं शङ्करभगवत्पादैः—"वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते" (ब्र० सू० शा० भा० १।१।२) इति। वेदान्तवाक्यानां ब्रह्मणि समन्वयः प्रथमाध्याये प्रतिपादितः। अत एवास्य समन्वयाध्याय इति नाम । तत्र प्रथमपादे स्पष्टब्रह्मलिङ्गानां श्रुतीनाम्, द्वितीयतृतीयपादयोः अस्पष्टब्रह्मलिङ्गानां श्रुतीनाम्, चतुर्थपादे अव्यक्तादिसन्दिग्धार्थपदानां च समन्वयः प्रदर्शितः। उपनिषदर्थनिर्णायकतयास्याध्यायस्य सुमहत् प्राधान्यम्। प्रथमत उपनिषत्तात्पर्यनिर्णयानन्तरमेव किल अन्यमतखण्डनमोक्षस्वरूपनिरूपणादीनाम् उत्थितिः। अतोऽप्पय्यदीक्षितः प्रथमाध्यायस्यैवास्मिन् न्यायरक्षामणौ व्याख्यां चकार।

यथा अभिमन्त्र्य बालादीनां कण्ठे बद्धो मणिस्तेषां रक्षां करोति तथायं शारीरकन्यायानां शङ्करभगवत्पादप्रतिपादितानां रक्षां करोतीति सार्थकमस्य नाम। शारीरकभाष्यव्याख्यासु ये वा मतभेदा दृश्यन्ते तेषां समन्वयः, अन्यैः कृतानामाक्षेपाणां परिहारश्च महता नैपुण्येन सम्पादितो अप्पय्यदीक्षितेन। प्रतिज्ञातं हि तेन ग्रन्थारम्भे—

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभागान् सम्प्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥

एनां पुराणपदवीमनुसृत्य सत्याम्
अत्यादरेण महतीमनुपाल्यमानाम् ।
शारीरकाभरणभावजुषां नयानां
रक्षाकरं मणिमनाकुलमुल्लिखामि ॥

अमुं शारीरकन्यायकलापपरिकर्मितम् ।
कुदृष्टिदोषहरणं कण्ठे कुरुत सन्मणिम् ॥ इति ।

प्रथमाध्यायगते सूत्रद्वयात्मके अन्तरधिकरणे छान्दोग्योपनिषद्गतम्—"अथ य एषोऽन्तरादित्ये हिरणमयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणवात् सर्व एव सुवर्णः, तस्य कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद, तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथः, तस्मात्त्वेवोद्गाता एतस्य हि गाता। स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च इत्यधिदैवतम्। (छा० उ० १।६।६-७) अथाध्यात्मम्—अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तदुक्थम्, तत्साम, तद् यजुस्तद् ब्रह्म, तस्यैतस्य तदेव रूपं, यदमुष्य रूपम्, यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम, स एष ये चेतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च"। (छा० उ० १।७।५) "तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः" (छा० उ० १।७।६) इति विषयवाक्यतया परिगृह्य किमस्मिन् आदित्यमण्डलाभिमानी कश्चिज्जीवो वर्ण्यते, उत परमेश्वरः प्रतिपाद्यत इति विचारः प्रवर्तितः। अस्मिन्नधिकरणे प्रथमं सूत्रम्—**"अन्तस्तद्धर्मोपदेशात्"** (ब्र० सू० १।१।२०) इति पूर्वोदाहृतायां श्रुतौ वर्णितस्यादित्यपुरुषस्य रूपवत्त्वम्, 'अन्तरादित्ये', 'अन्तरक्षिणि' इति आधारवत्त्वम्, "स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इति, "स एष ये चास्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इति ऐश्वर्यमर्यादावत्त्वं च श्रूयते। अतः अक्ष्यादित्ययोरन्तः जीव एव इति पूर्वपक्षोऽनेन सूत्रेण निराकृतः। सूत्रमेतद् व्याचक्षाणाः शङ्करभगवत्पादाः "तस्य परमेश्वरस्य धर्माणामुपदेशात् अन्तरादित्ये अन्तरक्षिणि च पुरुषः परमेश्वर एव" इति व्याख्याय—**"स एष सर्वेभ्यः पाप्मभ्य उदितः"** इत्युक्तः सर्वपाप्मापगमः, ऋक्सामाद्यात्मकतानिर्धारणेन सूचितं सर्वकारणत्वम्, सर्वात्मकत्वम्, लौकिकगानेष्वपि गीयमानत्वम्, लोककामेशितृत्वम्

इत्यादयः सर्वेऽपि धर्माः परमेश्वर एवोपपन्ना इति न्यरूपयन्। हिरण्य मश्रुत्वादयश्च जीवधर्माः परमेश्वरस्य सगुणरूपे कल्पिता इति न कोऽपि विरोधः। परमेश्वरस्य जीवानुग्रहार्थं मायाकल्पितरूपग्रहणसमर्थत्वाद् इति च प्रत्यपीपदन्।

अप्पय्यदीक्षितस्तु—प्रथमश्रुतादपि लिङ्गाद् अविवक्षितात् चरमश्रुतमपि प्रयोजनवत् लिङ्गं बलीय इति न्यायमनुरुन्धानः सर्वपाप्मोदय एव ब्रह्मणोऽविनाभाविलिङ्गम्। **"उदेति ह वै सर्वेभ्यः पाप्मभ्यः"** इति प्रयोजनस्य श्रुतत्वात् तदेव सफलम्, "अत एकमपि तल्लिङ्गं निश्चिततात्पर्यम्, अतादृशादनेकस्मादपि रूपवत्त्वादिलिङ्गाद् बलवत्, तात्पर्यानुसारित्वादागमप्रमाणस्य" इति प्रतिपादयन् सूत्रमेवं व्याख्यत्—"आदित्ये अक्षणि च उपासनासिद्धैर्दृश्यः, उद्गीथे सम्पाद्यः पुरुषः परमेश्वर एव, सफलानन्यथासिद्धसर्वपापविरहलिङ्गबलेन अतादृशान्यथासिद्धरूपवत्त्वादिलिङ्गान्यथाकरणसम्भवाद् इति सिद्धम्" इति।

अस्मिन्नर्थे सूत्रस्वारस्यमप्येवं प्रदर्शितं दीक्षितेन—**"अदृश्यत्वादिगुणको धर्मोक्तेः"** ( ब्र० सू० १।२।१ ) इतिवत् सूत्रे "धर्मोपदेशात्" इत्येतावति वक्तव्ये ('तद्धर्मोपदेशात्' इति ) तत्पदं 'तस्यैव धर्मः' इति अब्भक्षादिवद् अवधारणगर्भतया फलवचनाद्यनुसारेण सर्वपापविरहरूपतया पर्यवसितस्य सर्वपापोदितत्वस्य आदित्यजीवे सम्भवाभावरूपमनन्यथासिद्धत्वम्, तद्विचारद्वारा तत्प्रतिभटस्य रूपवत्त्वादेर्ब्रह्मण्यपि सम्भवरूपमन्यथासिद्धत्वं च सिद्धान्तबीजं ज्ञापयितुम्। **"आकाशस्तल्लिङ्गात्"** ( ब्र० सू० १।१।२२ ) इतिवत् 'तद्धर्मात्' इत्येतावति वक्तव्ये 'उपदेश'ग्रहणम्, तद्धर्मस्यैवोपदेशात् फलवचनावगतेन तात्पर्येण प्रतिपादनाद् इत्यर्थकतया सफलत्वरूपतात्पर्यलिङ्गवत्त्वम्, तत्प्रतिभटतया रूपवत्त्वतद्गतादित्यमण्डलादिनिष्ठत्वयोरैन्द्रजालिकदर्शितादद्भुतरूपविशेषतद्गतगोपुरारूढत्वयोरिव दर्शनविषयतया अनुवाद्यत्वेन, ऐश्वर्यमर्यादायाः श्रुत्यन्तरसिद्धे सर्वैश्वर्ये उपास्यतया अवयुत्यानुवाद्यत्वेन च पूर्वपक्ष्यापादितरूपादिप्रामाण्यपरिहारं ज्ञापयितुम्।

एवं 'तद्धर्मोपदेशात्' इत्यस्य—"तस्यैव परमात्मन एव, यो धर्मः, तस्यैवोपदेशात्, तात्पर्येण प्रतिपादनात्" इत्यर्थं प्रतिपाद्य, "किञ्च तद्धर्मयोः उपदेशाद् इति द्विवचनान्तसमासेन ब्रह्मैकधर्मस्य सार्वात्म्यस्य प्रतिपादनाद् इत्यपि हेतोरित्यर्थः" इति लिखन् दीक्षितः "धर्मस्योपदेशः" इति व्याख्यानन्तरम् "धर्मयोः उपदेशः" इति वा भगवत्पादोक्तविधया "धर्माणामुपदेशः" इति वा व्याख्यानेऽपि न दोष इति सूचयति। तेषु सर्वपाप्मविरहितत्वं साक्षात् प्रतिपादितो धर्मः, सर्वकारणत्व-सर्वात्मकत्व-लौकिकगानगीयमानत्वलोककामेशितृत्वादयस्तु ऋक्साम-

रूपतादिवर्णनेन सूचिता धर्मा इति प्रतिपादन एव भगवत्पादानां तात्पर्यम्। सर्वपाप्मोदितत्वमेव तात्पर्येण विवक्षितो धर्म इति तैरेव सूचितं प्रथमतस्तमेव धर्मं प्रतिपादयद्भिः।

एवम् अप्पय्यदीक्षितोऽस्मन्नधिकरणे—"निर्विशेषब्रह्मवादे सूत्रस्वारस्यं नास्ति" इति परेषां मतं निराकर्तुम्—"रूपवत्त्वं च ब्रह्मणोऽपि सम्भवति। सत्यस्य रूपस्य नीरूपशास्त्रविरोधेऽपि मायामयस्य तदविरोधात्" इति लिखन्ति। एवम्—"उपासनार्थमपि रूपवत्त्वस्य आरोपितत्वमयुक्तम्। न ह्यारोपितं दृश्यते" इत्यादि परेषां वादं निराकर्तुं ब्रह्मणि च रूपस्य "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद" इति वचनानुसारेण मायामयस्यैवाङ्गीकारात्। न च तद्बोधकवचनानामप्रामाण्यप्रसङ्गः, मायाविदर्शितमायादृष्ट्यनुवादवत् प्रामाण्योपपत्तेः, इह च "हिरण्मयः पुरुषो दृश्यते", "यन्मां पश्यसि" इत्यादौ तथैव दृष्ट्यनुवाददर्शनाच्च—इत्यादि प्रतिपादयति विनैव प्रतिवादिमतानुवादम्।

न्यायरक्षामणौ दीक्षितेन महती सूत्रव्याख्याननैपुणी प्रदर्शिता, उदाहरणतया आनन्दमयाधिकरणं पश्यामः, तस्मिन्नधिकरणे वृत्तिकारेण प्रतिपादितम् आनन्दमयस्य ब्रह्मत्वं प्रथमतोऽनूद्य, भगवत्पादास्तस्या व्याख्याया असङ्गतत्वं प्रदर्श्य, पुच्छवाक्यस्यैव ब्रह्मपरतां प्रत्यपादयन्, आनन्दमयस्य च जीवत्वम्, तदनुसारेण सूत्राणि एवं व्याख्यातानि भगवत्पादैः—**"आनन्दमयोऽभ्यासात्"** (ब्र० सू० १।१।१२)—"ब्रह्मपुच्छं प्रतिष्ठा" इत्यत्र किमानन्दमयावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति शङ्कायां पुच्छशब्दावयवत्वेनेति प्राप्ते उच्यते—"आनन्दमयोऽभ्यासात्"। "आनन्दमय आत्मा" इत्यत्र ब्रह्मपुच्छं प्रतिष्ठा इति स्वप्रधानमेव ब्रह्मोपदिश्यते। "असन्नेव स भवति" इत्यस्मिन्निगमनवाक्ये ब्रह्मण एव केवलस्य अभ्यस्यमानत्वात्" इति।

अप्पय्यदीक्षितस्तु एवं व्याचख्यौ—"आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्यम्, "असन्नेव स भवति" इति निगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वात्" इति। ततश्च "आनन्दमय एव निगमनश्लोकविषयोऽस्तु, अतश्च असिद्धोऽयं हेतुः" इति शङ्कामुद्भाव्य, **"ईक्षतेर्नाशब्दम्"** (ब्र० सू० १।१।५) इति सूत्राद् नञमनुवर्त्य—"आनन्दमयो न निगमनश्लोकप्रतिपाद्यः, तत्र ब्रह्मशब्दाभ्यासदर्शनात्" इति व्याचख्यौ।

**"विकारशब्दान्नेति चेन्न प्राचुर्यात्"** (ब्र० सू० १।१।१३)—भगवत्पादा एवं व्याचख्युः—"विकारशब्दात्, अवयववाचकपुच्छशब्दाद् 'न स्वप्रधानत्वं ब्रह्मण

इति यदुक्तं तन्न, प्राचुर्यादप्यवयवशब्दोपपत्तेः, प्राचुर्यं प्रायापत्तिः। अवयवप्राये वचनमित्यर्थः। अन्नमयादीनां हि शिर आदिषु पुच्छान्तेषु अवयवेषूक्तेषु आनन्दमयस्यापि शिर आदीन्यवयवान्तराणि उक्त्वा अवयवप्रायापत्त्या 'ब्रह्मपुच्छं प्रतिष्ठा' इत्याह" इति।

अस्य अप्पय्यदीक्षितकृता व्याख्या—'विकार'शब्देनावयवो लक्ष्यते। तद्वाची पुच्छशब्दो विकारशब्दः, स एव विकारो विगतकार्योऽनर्थकशब्दः। "अकर्तरि च कारके संज्ञायाम्" (पा० सू० ३।३।१९) इति कर्मणि घञन्तः कारशब्दः कार्यवाची। एवमर्थान्तरस्यापि गर्भीकरणाय 'अवयवशब्दात्' इति वक्तव्ये 'विकारशब्दात्' इत्युक्तम्। तथा च पुच्छावयववाचिनस्तदर्थपरित्यागे लक्षणीयार्थाभावेन प्रसक्तानर्थक्यात् पुच्छशब्दाद्धेतोर्न ब्रह्म प्राधान्येन प्रतिपाद्यम् इति चेद् इति शङ्कार्थः, 'प्राचुर्यात्' इत्यस्य भगवत्पादोक्त एवार्थः, एवमत्र 'विकार'शब्दप्रयोगस्य सार्थक्यं सुनिपुणं प्रत्यपादयदप्पय्यदीक्षितः।

तृतीयं "**तद्धेतुव्यपदेशाच्च**" (ब्र० सू० १।१।१४) इति सूत्रम्—"सर्वस्य हि विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते" इति व्याख्याय भगवत्पादाः — "अपराण्यपि सूत्राणि यथासम्भवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि" इत्युक्त्वा अधिकरणमिममुपसमाजह्रुः। अप्पय्यदीक्षितोऽस्य सूत्रस्य अन्येषां च पञ्चानां सूत्राणां व्याख्यां महता नैपुण्येनाकरोत्।

अस्मिन् सूत्रे तच्छब्दमानन्दमयपरं स्वीकृत्य आनन्दमयहेतुत्वप्रतिपादनात् पुच्छब्रह्मणस्तस्यैव प्राधान्यम् इति प्रतिपाद्य, अत्रत्येन तच्छब्देन आनन्दमयस्य परिग्रहणार्थमेव सूत्रकृता "ब्रह्मपुच्छमभ्यासात्" इति आर्जवेन सूत्रे कर्तव्ये "आनन्दमयोऽभ्यासात्" इति सूत्रितमिति सूत्रगतपदस्वारस्यमपि न्यरूपयत्।

"**मान्त्रवर्णिकमेव च गीयते**" (ब्र० सू० १।१।१५)—"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णे स्वप्रधानतया प्रकृतस्य ब्रह्मण एव प्राधान्यम् अङ्गीकरणीयम्, उपक्रमगतत्वात्। न तु पुनस्तदनन्तरमुक्तस्य आनन्दमयस्य इति। अनेन च न केवलमुपसंहारगतप्रमाणानुरोधेन, परमोपक्रमानुसारेणापि आनन्दमयवाक्यस्य ब्रह्मप्राधान्यं सिद्ध्यतीति भावः।

"**नेतरोऽनुपपत्तेः**" (ब्र० सू० १।१।१६) — "ब्रह्मविदाप्नोति परम्" इत्यादिपूर्वसन्दर्भस्य, "असन्नेव स भवति" इत्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येऽपि आनन्दमयवाक्यस्य आनन्दमयप्राधान्यम्, तत्र ब्रह्मणः कल्पितपुच्छभावेन उपसर्जनत्वं चास्तु इति शङ्काया अपनोदाय इदं सूत्रम्। इतरः=आनन्दमयः, न=प्राधान्येन

न प्रतिपाद्यः, अनुपपत्तेः=उपक्रमोपसंहारावगतब्रह्मप्राधान्यविरोधेन उपास्यानन्दमयविशेषणगतगुणसमर्पणार्थत्वकल्पनानुपपत्तेरिति तदर्थः।

**भेदव्यपदेशाच्च** ( ब्र० सू० १।१।१७ )—छान्दोग्ये "गायत्री वा इदं सर्वं भूतम्" इत्यादिकस्य पूर्वसन्दर्भस्य, "सर्वं खल्विदं ब्रह्म" इत्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येऽपि मध्ये कौक्षेयज्योतिष उपास्यस्य प्राधान्यम्, तत्र च दृष्टिविशेषणतया ब्रह्मण उपसर्जनत्वं च यथा दृष्टं तथात्रापि मध्यगते आनन्दमयवाक्येऽपि ब्रह्मणः पुच्छभावेन उपसर्जनत्वमस्तु इति शङ्का सूत्रेणानेन निरस्यते—"भेदविरोधी अपदेशो भेदव्यपदेशः। भेदप्रपञ्चमिथ्यात्वपर्यवसायी—

**"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।**
**आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"॥**

इत्युपदेशः, तद्विरोधाद् प्रियाद्यवयवयुक्तः सविशेष आनन्दमय उपास्यो न प्रतिपाद्यः" इति सूत्रार्थः।

**"कामाच्च नानुमानापेक्षा"** ( ब्र० सू० १।१।१८ )—भृगुवल्ल्यामन्नप्राणमनोविज्ञानक्रमेण पञ्चमपर्यायाम्नातस्यानन्दस्य प्राधान्यं दृश्यते। तथा आनन्दवल्ल्यामपि अन्नमयादिक्रमेण पञ्चमपर्यायाम्नातस्यानन्दमयस्य स्थानसाम्यात् प्राधान्यम् अनुमीयत इति शङ्कायाम् इदं सूत्रमुच्यते—काम्यत इति कामः, भृगुवल्ल्यामाम्नात आनन्दः। तद्दृष्टान्तमवलम्ब्यानन्दमयस्य प्राधान्यानुमानेऽपि प्रत्याशा न कर्तव्या। तत्र श्रुत्यैव आनन्दस्योपक्रान्तब्रह्मरूपताया "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिना पर्यवसानप्रतिपादनात्। इह तु आनन्दमयप्रतिपादनानन्तरं ब्रह्म प्रतिपाद्यते। अतः पञ्चमस्थानसाम्येन आनन्दमयस्य न प्राधान्यमिति सूत्रार्थः।

**"अस्मिन्नस्य च तद्योगं शास्ति"** ( ब्र० सू० १।१।१९ )—अस्मिन्नेव प्रकरणे "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति" इति शास्त्रं "रसो वै सः" इति पुच्छब्रह्मणो निरतिशयानन्दस्वरूपत्वं प्रतिज्ञाय, आनन्दमयस्तत्तद्विषयानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितं ब्रह्मानन्दलेशं लब्ध्वा निर्वृतो भवतीति शास्ति। एवम् आनन्दमयपरामर्शस्य निरतिशयानन्दरूपपुच्छब्रह्मप्रतिपत्तिशेषत्वं क्लृप्तमिति आनन्दमयवाक्येऽपि तदुपन्यासस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वमेव युक्तम्, न तूपासनाविधानार्थत्वमिति सूत्रस्याशयः। एवं तत्तदाशङ्कानिराकरणपूर्वकं सूत्रव्याख्याने, सिद्धान्तस्थापने च श्रीमता अप्पय्यदीक्षितेन प्रदर्शिता प्रतिभा प्रतिवादिनोऽपि विस्मापयति।

अपशूद्राधिकरणस्यान्ते भगवत्पादैः सूचितम् इतिहासपुराणादिद्वारा द्विजेतराणां ब्रह्मविद्याधिकारं विशदीकृत्य, अप्पय्यदीक्षितः — "किञ्च शूद्रस्य क्वचित्

क्वचिदस्त्येवेतिहासपुराणप्रतिपाद्यायां सगुणविद्यायामप्यधिकारो यत्र विशिष्य विधानं लिङ्गं नास्ति, यथा प्रणवरहितेन पञ्चाक्षरेण शिवोपासनायाम्, यथा वा नारदस्य प्राचीने शूद्रजन्मनि यतिभिरुपदिष्टायामच्युतोपासनायाम् । एवं शैवपाशुपत-पाञ्चरात्रादिदृष्टेषु सगुणविद्याविशेषेष्वपि शूद्रोचितसंस्कारपूर्वकं विशिष्य विहितेषु तस्याधिकारो द्रष्टव्य." इत्यादिना सगुणविद्यास्वपि आगमादिद्वारा द्विजेतराणामधिकारं प्रत्यपादयत् ।

प्रसिद्धालङ्कारिकोऽप्यय्यदीक्षितः कस्यचिद्विषयस्य निर्णयावसरे काव्यवाक्यान्यपि बहूनि उदाजहार । अनुकृत्य धिकरणस्य विषयभूते "ईशानो भूतभव्यस्य" इति वाक्ये ईशानशब्दो रूढ्या परमेश्वरमभिधातुं नेष्टे; यतः प्रतिसम्बन्धिनो भूतभव्यस्य उपादानात्, अत्र यौगिकार्थस्यैव ग्राह्यत्वात् । यथा "पद्मानि यस्याग्रसरोरुहाणि" इति वाक्ये सरःप्रतिसम्बन्धिनः 'अग्रस्य' उपादानात् सरोरुहशब्दो रूढिं जहाति, यौगिकमेव चार्थं प्रतिपादयति । अत एव च पुनः 'पद्म'शब्दप्रयोग इति पूर्वपक्षम् अन्यस्य श्लोकस्योदाहरणेन प्रतिक्षिपति । यौगिकार्थप्रतिसम्बन्ध्यनुपादान एव रूढ्युन्मेष इति न नियमः, तत्प्रतिसम्बन्ध्युपादानेऽपि रूढशब्दश्रवणप्रयुक्तरूढ्युन्मेषस्यानिवार्यत्वात् । काव्येषु तु व्यङ्ग्यार्थप्रधानेषु यस्य शब्दस्य यौगिकार्थो व्यञ्जनाव्यापारानुकूलस्तं शब्दं यौगिकार्थ एवोपक्षीणं कृत्वा तदीयरूढ्यर्थसमर्पणार्थं क्वचित् क्वचित् पदान्तरमुपाददत इति तत् पदान्तरोपादानं न यौगिकार्थप्रतिसम्बन्ध्युपादानस्य रूढ्युन्मेषविरोधित्वप्रयुक्तम् । तदनुपादानेऽपि—

"तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये" ॥

( कु० स० ३।१० )

इत्यत्र तद्दर्शनात् । अत्र हि कैमुतिकन्यायोपयोगिसारतरायुधत्वव्यञ्जनानुकूले यौगिकार्थ एव पिनाकपाणिशब्दमुपक्षीणं कृत्वा तद्रूढिविषयशिवसमर्पणार्थपदान्तरं प्रयुक्तम् । एवमिहापि हिमवदौन्नत्यव्यञ्जनानुकूलयौगिकार्थसमर्पणव्यग्रं सरोरुहपदमिति तद्रूढ्यर्थबोधनाय पद्मपदं प्रयुक्तम् ।

किञ्च यस्य योगरूढिमतः पदस्य सन्निधौ तदलभ्यस्य कस्यचिदवयवार्थस्य विशेषकं किमपि प्रथममुपादीयते यथा—"पद्मानि यस्याग्रसरोरुहाणि" इति, यथा वा "लपनं पद्ममेवास्या लावण्यसरसीरुहम्" इति, "तत् पदं तद्विशेषितयौगिकार्थवशीकृतमिति तेनापि हेतुना तत्र रूढ्युन्मेषो न भवतीति वक्तुं शक्यम्" इति प्रतिपाद्य अत्र तु ईशानपदार्थसङ्कोचकस्य पदस्य कस्यापि प्रथमतोऽनुपादानाद् रूढ्यर्थस्यैव ग्रहणम् इति सिद्धान्तीचकार ।

असम्भावितगुणवैकल्येन कश्चिन्निन्द्यमानोऽपि शोकं न व्रजति । "आकाशमयं खादितुं न शक्तः" इति परेण कृतां निन्दां श्रुत्वा यदि कश्चित् शोकाक्रान्तो भवति तदासौ—

**"एतत्तस्य मुखात् कियत् कमलिनीपत्रे कणं पाथसो**
**यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यवस्मादपि ।**
**अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः**
**कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा" ॥**

इति श्लोके वर्णितं मूढमनुकुर्याद् इति वदति अपशूद्राधिकरणे, सूर्येऽप्यसम्भावितस्य ज्योतिषो जानश्रुतावभावस्य कथनं तस्य निन्देव न भवतीति कथनप्रसङ्गे ।

दहराधिकरणे—"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति वाक्ये अनन्वयो वा उपमाविशेषो वा इति विमृशन् अप्पय्यदीक्षितो लिखति—"अभेदे उपमानोपमेयभावनिर्देशो द्वेधा—उपमानभावे उपमेयभावे च परस्परव्यावर्तकविशेषणरहितः, तत्सहितश्च । तत्र आद्यस्य "गगनं गगनाकारम्" इत्याद्युदाहरणं प्रदर्श्य तत्र अनन्वयालङ्कारम, द्वितीयस्योदाहरणभूते—

**"उपाददे तस्य सहस्ररश्मिः त्वष्ट्रा नवं निर्मितमातपत्रम् ।**
**स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥"** (कु०स० ७।४१)

इति श्लोके उपमाप्रभेदं च निरूपयति—"अत्रोपमानस्य शिवस्यैव उपमेयत्वेऽपि उत्तमाङ्गपद्गङ्गाप्रवाहत्वच्छत्रदुकूलसन्निकृष्टमौलित्वरूपविशेषणोपाधिकृतभेदसत्त्वान्निबध्यमानं सादृश्यमन्वेतीति नानन्वयः, किन्तूपमाप्रभेदः" इति ।

चमसाधिकरणे—प्रकृतौ छागत्वकल्पनासमर्थनप्रसङ्गे अप्पय्यदीक्षितो यथा काव्येषु विषयविषयिसामानाधिकरण्यं विनापि कल्पना दृश्यते, तथा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिमन्त्रे कल्पना इति प्रतिपादयन्—

**"वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या**
**सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली ।**
**अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ**
**तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोः" ॥**

इति श्लोकमुदाजहार ।

एवं न केवलं न्यायमीमांसाव्याकरणादिशास्त्राणाम्, अलङ्कारशास्त्रस्यापि वेदान्तेऽनुप्रवेशवर्णनं श्रीमतोऽप्पय्यदीक्षितस्य सरसहृदयतामभिव्यनक्तीति शम् ।



# अपभ्रंशशब्दानां साधुपूर्वकत्वविमर्शः

**डॉ० देवस्वरूपमिश्रः**

आचार्योऽध्यक्षश्च, वेदान्तविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

❀ ❀ ❀

**गुरोः श्रीरघुनाथस्य कृपया प्राप्तसन्मतिः ।**
**गतिः सर्वत्र शास्त्रेषु वेदान्ते तु विशेषतः ॥**
**लेखार्थं प्रेरितो नूनं मान्यैः श्रीहरिश्चन्द्रकैः ।**
**अतोऽहं यत्नमास्थाय लेखार्थं यत्नमाचरे ॥**

तत्र मञ्जूषायामनेकदार्शनिकरत्नपूर्णायामयं राद्धान्तो व्यवस्थापितो यद् ये हि अपभ्रंशकाः शब्दास्ते साधुशब्दानामेव रूपान्तरतामापन्नाः । यथा—'घट' इति शब्दस्य 'घड़ा', 'कर्पट' इत्यस्य 'कपड़ा' । **अनेरिया** इत्यस्य साधुः 'अनर्यीया' इति पूज्यैः कल्पनाधिनाथैः श्रीरघुनाथैरवधारितम् । "अर्य-स्वामिवैश्ययोः" इति सूत्रादर्यशब्दः स्वाम्यर्थकः । अर्यस्य स्वामिन इयमर्यीया तद्भिन्ना अनर्यीया अनेरिया इति लोके । एवमेव '**गगरा**' इत्यस्य गॄ-निगरणे इत्यस्माद् यङ्लुकि '**गर्गरा**'-शब्दः साधुः । अत एव महाभारते शास्त्रे—

**"गर्गरा नहि मथ्यन्ते यदि राजा न पालयेत्" ।**

राजपालितत्वाभावेऽराजकताप्रसक्तौ गवामप्यभावेन दुग्धदधिदुर्लभत्वान्नहि गर्गरे दधिविलोडनविलोकनमपि । एवमेव मूत्रेन्द्रियवाचक**कर**शब्दो लोकेऽपि भोजपुर्यामिश्लीलतया प्रयुज्यते । तत्र पूज्यैः स्वासाधारणधीषणावधीरितधीषणैः शिष्यकदम्बपरिपूजितपादपीठैर्गुरुवर्यैः श्रीरघुनाथशर्मभिरुक्तम्—"कर-वर्षावरणयोः" इत्यस्य धातो रूपमिदम् ।

एवमेव बहवः शब्दाः स्फुरन्ति, यथा—**कफन** । मृतजनावरणवस्त्रं कफनशब्देन प्रोच्यते । तन्मन्ये कुपटशब्दस्यापभ्रंशः । एवं "खोरी" इति, ग्रामे नगरे वाऽत्यन्तसंकीर्णके

मार्गं खोरी-शब्देन प्रोच्यते। अत एव पूर्वाञ्चलप्रदेशे विवाहे गायन्ति नार्यः—
"आपन खोरिया बहारी ए फलाना बाबा द्वारे प आइल बारात हे" ॥ इत्यादि।

एकः प्रश्नो जागर्ति—**सोहर** इति कस्यापभ्रंश इति। मया समुत्तरितं **शुभकर** इत्यस्येति मन्ये। समर्थयामासुश्च गुरवः पाणिनिसन्निभा व्याकरणे श्रीरामप्रसादत्रिपाठिनः, श्रीकैलासपतित्रिपाठिनश्च। याल इत्यस्य **स्थाल** इति कल्पतरौ। **मउगी** भार्यार्थिकः शब्दो मधुगी इत्यस्यापभ्रंशः। राह-शब्दस्तु शुद्धो रह-त्यागे-धातोर्निष्पन्नः, न हि मार्गे सदा कोऽपि प्रसक्तः। रह्यते त्यज्यत इति राहः। मण्डप इत्यस्य **मड़हा**, मण्डपी इत्यस्य मड़ई।

ननु 'बोधो नेह निवार्यते' इति वैयाकरणभूषणसारोक्तेरनुसारेणैषां शब्दानामर्थवत्त्वाद् बोधजनकत्वाच्च प्रातिपदिकत्वापत्तिरिति चेत्,न, पुण्यजनकतावच्छेदकत्वाभावेन साधुत्वाभावान्न प्रातिपदिकत्वम्। अत एव महाभाष्ये—ये हि शिष्टा विद्वांसस्ते नापभाषन्ते। अपभ्रंशो हि म्लेच्छशब्दः। नापभाषितवै न वा म्लेच्छितवै इत्यादि प्रोक्तम्। न चाद्वैतवेदान्तानुसारं तत्त्वमस्यादिवाक्यानामखण्डैकब्रह्मप्रतिपादकत्वाद्वाक्यैकवाक्यतान्यायेनैकार्थकत्वात् पदस्थानीयत्वेन पदैकवाक्यतया वा प्रातिपदिकत्वापत्तिरिति वाच्यम्, समासग्रहणनियमेन निवारणात्।

**गुरोर्दर्शितमार्गेण स्वबुद्धेः प्रतिभानतः।**
**यथाप्रभं प्रयुक्तेदं तत्त्वं तत्त्वावगाहनात् ॥**

**लोकैषणा भवत्येव सर्वत्रैव प्रवर्तिका।**
**नात्र सा कारणं किन्तु हरेश्चन्द्रस्य प्रेरणम् ॥**

**सुषमायां प्रकाशार्थमग्रेऽपि विनियोजये।**
**यथाज्ञानं यथाप्राप्तं शास्त्राच्चाविरुद्धकम् ॥**

**बढ़ई** इत्यपभ्रंशस्य **"बर्धकी"** इति शुद्धं रूपम्, वृधु-छेदने इति धातोर्निष्पन्नम्। अत एव व्याख्यानस्य हेतुद्वयं दर्शितं रामरुद्रभट्टाचार्यैः—
"अप्रतिपत्तेरतिप्रतिपत्तेर्वा व्याख्यानं कुर्वन्ति सन्तः" इति।

अत एव श्रुतौ **"कं ब्रह्म खं ब्रह्म"** इत्युक्तम्। तत्र केवलं खं ब्रह्मेति वदेत्,तर्हि भूताकाशे ब्रह्मत्वापत्तिः, अतः कमिति वचनं प्रयुक्तम्। तस्य सुखरूपाभावान्नातिव्याप्तिः। केवलं कं ब्रह्मेति वदेत्, तर्हि वैषयिकसुखे विषयसन्निकर्षप्रयुक्ततारतम्यान्वितेऽतिव्याप्तिरतो हेतोः खमिति। तथा च नित्यसुखरूपात्मेति श्रुत्यर्थः। इत्थमेव "अत्रायं पुरुषः स्वयं ज्योतिः" इत्यत्रात्रशब्दस्य प्रयोगः। यः सदा स्वप्रकाशस्वरूपः परमात्मा जीवो वा तस्य कृतेऽत्रेति विशेषणं न युज्यते। अत एव महिम्नस्तोत्रे—"परिच्छिन्ना-

मेवं त्वयि परिणता बिभ्रति गिरम्" इत्याद्युक्तम् । अतः स्वप्नकाले बाह्यसाधननिरपेक्ष-प्रकाशत्वेन जीवमन्तरा नान्यः कोऽपि प्रकाशोऽवलम्ब इति कृत्वा तत्रात्रशब्दप्रयोगः कृतः । दिवा सूर्यः प्रकाश', रात्रौ चन्द्रः । तदभावेऽपि मणिर्वा वाग् वा प्रकाशः । अत एव शब्दवेधिबाणः प्रसिद्धः ।

यद्यपि गृहशब्दस्यापभ्रंशः घर-शब्द इति वदन्ति; किन्तु नेदं युक्तम्, एकानुपूर्वीशून्यत्वात् । किन्तु "घृ" निगरणे इत्यस्य शुद्धं घरति गृह्णाति स्वस्मिन्नेव समावेशयतीति गृहम् । अतोऽप्रयुक्तत्वाच्छुद्धस्याप्रयोगे शास्त्रे लोकस्य लाघवप्रियत्वाद् घर-शब्दः शुद्ध एव प्रयुज्यत इति मन्ये । **'लाठी'** इत्यस्यास्तु यष्टिका लाठिका लठिका लाठी इति क्रमेणापभ्रंशता ।

पुण्यार्जनं नैव भवत्यसाधु-
शब्दप्रयोगे तु तथापि नूनम् ।
अन्यप्रयोगैकप्रभावप्राप्तं
पुण्यप्रभूतं भवतीति निश्चितम् ॥

काशीपुरीमधिवसन् निखिलागमानां
तत्त्वमवाप्तुं मनसा यतेऽहम् ।
शक्तिमनुरुद्धय गुरोः प्रसादात्
प्राप्तः प्रसादः पितरौ तु हेतू ॥

देवस्वरूपमिश्रेण कृतो यत्नो यथामति ।
तेन तुष्यतु विश्वात्मा येन काशी ह्यवाप्यते ॥ इति ।



# नामार्थविमर्शः

डॉ० रामकिशोरत्रिपाठी
व्याकरणविभागाध्यक्षः
श्रीमाथुरचतुर्वेदसंस्कृतमहाविद्यालये
डैम्पियरनगरम्, मथुरा

❀❀❀

यच्छक्तिसत्प्रभावेण नामरूपात्मकं जगत् ।
विवर्ततेऽर्थरूपेण तच्छब्दब्रह्मणे नमः ॥
सत्त्वद्रव्यात्मकः शब्दः सङ्केतेन नाम कथ्यते ।
जातिव्यक्त्यादिभेदेन स एव दृश्यते पृथक् ॥

अनादिरयं शब्देन प्रवर्तमानो नामरूपात्मको जगद्व्यवहारः । तत्र "[1]स्वर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः सङ्केतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केत इति । सङ्केतश्चात्र संज्ञारूपो गृह्यते, सङ्केत्यते= बोध्यतेऽर्थरूपं येनेति व्युत्पत्तेः । अर्थसङ्केतनादेव शब्दः संज्ञानामादिपदेन व्यपदिश्यते । इयमेव नामरूपात्मकता लोकस्य । तदुक्तं पातञ्जलभाष्ये —

"[2]सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्द इति । अत्र सङ्केतबोधकः शब्द एव नामपदेन सङ्केतबोध्यश्चार्थो रूपपदेन ख्यायेते । तथा चाह मञ्जूषाकारः —"[3]ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम्" इति ।

अयमेव शब्दोऽर्थबोधकशब्दस्वरूपत्वेन "[4]अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इति सूत्रेण प्रातिपदिकत्वेन व्यपदिश्यते । पाचकादिकृदन्तशब्दा अपि पाककर्तृरूपसङ्केतस्य बोधकत्वेन [5]नामप्रातिपदिकादिपदेन व्यपदिश्यन्ते । "शब्द्यतेऽसौ शब्दः" कर्मणि घञ्विधानेन शब्दो द्रव्यम् । तच्च द्रव्यं द्विविधम्—सांव्यवहारिकं

---

१. वै० परमलघुमञ्जूषास्थन्यायवाचस्पत्यग्रन्थवाक्यम्; २. तस्य वाचकः प्रणव इति सूत्रभाष्यम् ।
३. वै० प० ल० मञ्जूषा, शक्तिनिरूपणे; ४. पा० सू० १।२।४५ ।
५. पा० सू० १।२।४६ ।

लिङ्गसंख्यान्वयित्वञ्चेति। सांव्यवहारिकं जागतिकविषयरूपम्। शब्दस्तु लिङ्गसंख्यान्वयित्वेन द्रव्यमिति व्यवह्रियते। शब्दनं शब्दः, पक्षे भावे घञ्प्रत्यये क्रियारूपत्वाच्छब्दो ध्वनिरिति। उक्तञ्च भाष्यकारेण—"[1]अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः" ध्वन्यते=कण्ठताल्वाद्यभिघातेन व्यज्यते ध्वनिरिति पक्षे शब्दो गुणः। न्यायदर्शने "[2]शब्दगुणकमाकाशम्", व्याकरणेऽपि "[3]श्रोत्रोपलब्धिबुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः"।

अथ च सत्त्वपदेनापि शब्द एवाभिहितः। तच्च सत्त्वं द्विविधम्। सीदन्ति=विशेषणत्वेनावतिष्ठन्तेऽस्मिंल्लिङ्गवचनानि यस्मिन् तत्सत्त्वं द्रव्यपदार्थबोधकम्। सतो भावः सत्त्वमिति पक्षे सत्तात्मकक्रियापदार्थबोधकम्। तथा चोक्तम् "[4]चादयोऽसत्त्वे" इति सूत्रभाष्ये "[5]अयं सत्त्वशब्दोऽस्त्येव द्रव्यपदार्थकः। तद्यथा—सत्त्वमयं ब्राह्मणः, सत्त्वमियं ब्राह्मणीति। अस्ति क्रियापदार्थकः। सद्भावः सत्त्वमिति। अत्र शब्दशास्त्रे द्रव्यपदार्थबोधकमेव सत्त्वमङ्गीक्रियते। तथा हि कैयटे—"[6]न हि चादिषु सत्तावाची कश्चिच्छब्दोऽस्ति यदर्थो निषेधः स्यात्"। शब्दमेवान्ये [7]फिट्पदेन व्यवहरन्ति। स च शब्दो द्रव्यभिन्नेऽर्थे निपातसंज्ञकः, क्रियायोगे [8]चोपसर्गसंज्ञको [9]गतिसंज्ञकश्च भवति। ते च निपाताः "[10]स्वरादिनिपातमव्यय"मिति सूत्रेणाव्ययसंज्ञकाः सन्ति। शब्दस्यैताः 'निपातः, उपसर्गः, गतिः, अव्ययम्, प्रातिपदिकम्' इत्यादयः संज्ञाः। ध्वनिः, नाम, फिट् इत्येते पर्यायत्वेनाभिमताः। तत्र ध्वननाद् ध्वनिः शब्दगुणः, सङ्केतबोधकत्वेन नामेति संज्ञा। फिट् इति पूर्वाचार्यैः कृता शब्दस्य संज्ञा। सत्त्वं द्रव्यञ्चार्थौ शब्दस्येति। स्फुटत्यर्थो यस्मादिति व्युत्पत्त्याऽर्थबोधकः स्फोटशब्द एतदतिरिक्तः।

शब्दार्थविषये शास्त्राणां सिद्धान्तभेदेन मतभेदः। तत्र मीमांसका लाघवाज्जातावेव शब्दस्य सामर्थ्यमभिमन्यन्ते। जातिपक्षं समर्थयता शब्दशास्त्रविदाऽऽचार्येण "[11]जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रमुपदिष्टम्। जातिपक्षमाश्रित्य "[12]अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रं व्याकुर्वता भाष्यकारेण "[13]अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिस्तथोवर्णाकृतिः"।

---

१. पस्पशाह्निके महाभाष्ये; २. न्यायदर्शने आकाशलक्षणम्; ३. महाभाष्ये।
४. पा० सू० १।४।५७; ५ महाभाष्ये, पा० सू० १।४।५७।
६. भाष्यप्रदीपे, पा० सू० १।४।५७; ७. फिषोऽन्त उदात्तः।
८. उपसर्गाः क्रियायोगे, (पा०सू०१।४।५९); ९. गतिश्च, (पा० सू० १।४।६०)
१०. पा० सू० १।१।३७; ११ पा० सू० १।२।५८।
१२. पा० सू० १।१।६९; १३. महाभाष्ये, पा० सू० १।१।६९।

शब्दजातीनां वाचकत्वम्, अर्थजातीनाञ्च वाच्यत्वं महावैयाकरणेन भर्तृहरिणाऽप्युक्तम्—"[1]यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः"। अर्थगता जातिः शक्या, शब्दगता जातिश्च शक्ता, लाघवात्। व्यक्तीनां तु न शक्यत्वं शक्तत्वं वा, प्रत्येकं तत्त्वे तासामानन्त्येन गौरवात्, एकस्या एव तत्त्वे व्यभिचारात्, विनिगमनाविरहाच्च। व्यक्तीनामानन्त्याच्छक्तिग्रहे गौरवमभिप्रेत्य जातिपक्षमेव समर्थितं नागेशेन—"[2]ननु केवलव्यक्तिषु शक्तिग्रहोऽसम्भवी, अनन्तव्यक्तीनामेकपदोपस्थित्यभावेन सङ्केतग्रहासम्भवात्"। अथ च भूषणकारेणापि—"[3]एकम्=जातिः लाघवेन तस्या एव वाच्यत्वौचित्यात्, अनेकव्यक्तीनां वाच्यत्वे गौरवात्"।

जातौ शक्तिवादिनां नये "गामानय" इत्यादौ गोव्यक्तेरानयनकर्मत्वेन बोधाय व्यक्तौ लक्षणाऽभ्युपगम्यते। तत्र जातौ शक्तिः, व्यक्तौ लक्षणेति शक्तिद्वयकल्पनारूपं गौरवमस्त्येव।

अथ च जातिशक्तिवादिनां मतेऽपि जातिप्रकारकव्यक्तिविशेषक एव शाब्दबोधः, कुत्रापि व्यक्तेः प्रकारतयाऽप्रतीतेः। अतो व्यक्तेरेवैकस्या वाच्यत्वमस्तु व्यक्त्यन्तरबोधस्तु लक्षणया भविष्यतीति न गौरवमित्याशङ्क्य समाधत्ते—व्यक्तेर्वाच्यत्वेऽप्येकस्यैव तत्त्वेन लाघवस्य विनिगमकत्वाभावेऽपि सम्बन्धलाघवं विनिगमकं भवति। तथा चोक्तं भूषणे—"[4]एवं ह्येकस्यामेव व्यक्तौ शक्त्यभ्युगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम्। जात्या तु सहाऽऽश्रयत्वमेव संसर्ग इति लाघवम्"।

जातिलक्षणं हि "नित्यत्वे सति अनेकसमवेतत्वे सति प्रकारतयाऽन्यव्यावर्तकत्वम्"। तादृशस्य लक्षणस्यैकव्यक्तिरूपेष्वाकाशादिष्वभावाज्जातिपदं प्रकारबोधकम्। तथा चोक्तं न्यायदर्शने—"[5]आकाशकालदिशामेकैकव्यक्तित्वादिकं न जातिः। किन्तु आकाशत्वं शब्दाश्रयत्वम्"।

एवं दर्पणकारेणापि—"[6]तत्तत्पदार्थासाधारणो धर्म इत्यर्थः। तेनाभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाभावेऽपि न क्षतिः"। प्रतिद्रव्यं भासमानः प्रकाराख्योऽवच्छेदकधर्म एवात्र जातिपदेनोच्यते। स च धर्मः शास्त्रेषु प्रवृत्तिनिमित्तमित्युच्यते। प्रवृत्तिनिमित्तत्वञ्च "[7]वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योप-

---

१. वाक्यपदीये ब्रह्मकाण्डे, कारिका-१५;
२. वैयाकरणमञ्जूषायां नामार्थनिरूपणे।
३. वै० भूषणसारे नामार्थनिरूपणे;
४. वैयाकरणभूषणसारे नामार्थनिरूपणे।
५. न्यायसिद्धान्तमुक्तावल्यां प्रत्यक्षप्रमानिरूपणे;
६. वै० भूषणसारे दर्पणटीकायाम्।
७. प्रवृत्तिनिमित्तलक्षणमिदं पक्षधरमिश्रकृतप्रकाशग्रन्थे।

स्थितीयप्रकारतावत्त्वरूपम्"। घटत्वरूपे घटशब्दस्य प्रवृत्तिनिमित्ते वाच्यत्वस्य, वाच्यो यो घटस्तद्वृत्तित्वस्य, समवायेन घटत्वविशिष्टघटोपस्थितौ उपस्थितीय-प्रकारतावत्त्वस्य च सत्त्वेन लक्षणसमन्वयः। जातिवादिनां मतं समर्थयतोच्यते मञ्जूषाकारेण—"[1]गवादीनां धर्म एव शक्तिः, नानाव्यक्तीनां शक्यत्वे गौरवात्। जातिशक्तिवादे लक्षणया व्यक्तिबोधः। व्यक्तिवादे लक्षणया व्यक्त्यन्तर-बोधः। उभयत्रापि लक्षणाऽभिगम्येऽर्थे सम्बन्धगौरवमभिप्रेत्य जातौ शक्तिः स्वी-क्रियते। व्यक्तिवादे "स्वसमवेतसमवायित्वं संसर्ग इति गौरवम्। स्वं व्यक्तिः, तत्र समवेता जातिः, तत्समवायित्वं व्यक्ताविति लक्षणसमन्वयः। जातिशक्तौ च स्वसमवायित्वं संसर्ग इति लाघवम्। स्वं=जातिः तत्समवायित्वं व्यक्ताविति लक्षणसमन्वयः।

जातेर्नित्यतया "घटो भवति", "पटो नश्यति" इत्यादौ उत्पत्तिविनाशादि-क्रियायामन्वयाभावाद् व्यक्तौ शक्तिः कल्प्यते। तत्र व्यक्तीनामनेकत्वे कल्पितशक्तौ सम्बन्धगौरवमिति चेत्, न, व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणतया तस्याश्चैक्येन तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पना-विरहेणागौरवात्।

जातिपदार्थवादेऽपि व्यक्तिः पदार्थैव, न पदार्थातिरिक्ता काचित्। जातौ शक्तिः, व्यक्तौ लक्षणेति पक्षेऽपि लक्ष्यतावच्छेदकं जातिरेवास्ति। तद्यथा गोपदेन शक्त्या गोत्वजातेर्बोधः, गोव्यक्तेश्च बोधो लक्षणया भवति। तत्र लक्षणया बोधित-गोव्यक्तेरवच्छेदकधर्मो गोत्वमेवास्ति।

जातिशक्तेर्व्यक्तौ लक्षणेति वादिनां मण्डनानुयायिनां मतेऽपि लक्षणया जातिप्रकारक एव बोधः। तद्यथा "नीलो घटः" इत्यादौ नीलादिपदं शक्यनीलादि-गुणपुरस्कारेण लक्षणया नीलादिगुणविशिष्टघटादिपदार्थबोधकं तथैव गोत्वादिकं शक्यजातिपुरस्कारेण लक्षणया गवादिपदबोधकम्। उक्तञ्च मञ्जूषायाम्—"[2]शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा"। सा च व्यक्तौ लक्षणा निरवच्छिन्ना सावच्छिन्ना वा। नाद्यः, अवच्छेदकधर्मं विना कस्या अपि व्यक्तेरुपस्थिते-रसम्भवात्। सावच्छिन्नेति पक्षे जातेरेवावच्छेदकत्वं वाच्यम्। तथा च लक्ष्यता-वच्छेदकतयैव जातिभानोपपत्तौ तत्र शक्तिकल्पना व्यर्था।

केचित्तु जातिशक्तिवादे आक्षेपेण व्यक्तेर्बोधः। तथा चाह—जात्याऽऽक्षिप्ता व्यक्तिः पदार्थ इति। अयमेव विशिष्टशक्तिवादः। इमं पक्षं समर्थयतोच्यते गौतमेन—

---

१. वैयाकरणमञ्जूषायां नामार्थप्रकरणे।

२. नामार्थनिरूपणे मञ्जूषास्थं वाक्यमिदम्।

"[1]जात्याकृतिव्यक्तयः पदार्थाः"। आकृतिपदार्थपक्षेऽपि द्रव्यं पदार्थ एव न पदार्थातिरिक्तम्। उक्तं हि भाष्ये—"[2]न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, नापि द्रव्यपदार्थकस्याकृतिर्न पदार्थ' इति। अत्र जातौ शक्तिवादिनो मीमांसका वदन्ति यद् व्यक्तिशक्तावस्माकं न वैमत्यम्, अपि तु व्यक्तिशक्तिज्ञानहेतुतायामेव। अत एव व्यक्त्यंशे कुब्जाशक्तिरिति गीयते, तदंशे तज्ज्ञानानपेक्षणात्। उक्तं हि कुब्जलक्षण-मायुर्वेदे—

"[3]हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्।
क्रुद्धो वायुर्यदा कुर्यात् तदा तं कुब्जमादिशेत्"॥ इति।

तद्यथा कुब्जो विकृतेनाङ्गेन किमपि विधातुमशक्तः, अविकृतेन हस्तादिना भोजनादिकं सम्पादयति, तथैव जातिबोधमन्तरेण व्यक्तिमात्रबोधे कुब्जाशक्तिः किमपि बोधयितुमशक्ता जातिबोधमाश्रित्य व्यक्तिबोधे क्षमते।

कुमारिलभट्टानुयायिनो मन्यन्ते—न व्यक्तेः स्मरणं नापि तत्र कुब्जाशक्तिः; किन्तु जात्या व्यक्तिराक्षिप्यते। स चाक्षेपोऽनुमानरूपम्। तादात्म्येन जातेराधेयतया व्यक्त्यापेक्षकत्वेन न वैयधिकरण्यम्। अनुमानञ्चात्र "[4]गोत्वं गवाश्रितम्, गोनिष्ठ-प्रतियोगितानवच्छेदकधर्मवत्त्वात्, तादृशेन हेतुनोपस्थितेरसार्वत्रिकत्वान्नान्येऽनु-मानगम्यं व्यक्तिबोधं स्वीकुर्वन्ति।

केचित्तु व्यक्तिमात्रं पदार्थमभिमन्यन्ते। तथा चाह भूषणे—"[5]यद्वा केवल-व्यक्तिरेव एकशब्दार्थः" तत्तज्जातिप्रकारकतदाश्रयविशेषकशाब्दबुद्धित्वावच्छिन्नं प्रति तज्जात्यवच्छिन्नविशेष्यताकशक्तिज्ञानस्य कारणत्वेन "अ" इत्यादिपदेनैव अत्वजात्यवच्छिन्नसकलव्यक्तिप्रतीतिसम्भवेन "[6]अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रेऽण्ग्रहणस्य वैयर्थ्यापत्तिः स्यात्।

केवलजातिशक्तिवादेऽपि जातिशक्तिज्ञानस्यैव विशिष्टबोधे कारणतया, लक्षणया, अव्यतिरेकेण (अविनाभावेन) वा व्यक्तिबोधसम्भवेऽण्ग्रहणवैयर्थ्यं तदवस्थमेव। व्यक्तिपक्षमेवाश्रित्य "[7]सरूपाणामेकशेष एकविभक्तौ" इति सूत्रारम्भः क्रियते।

वस्तुतस्तु विशिष्टस्यैव पदार्थत्वम्। यद्यपि "आकृतिपदार्थस्य द्रव्यं न पदार्थः" इत्यादिभाष्याद् विशकलितयोरेवाकृतिव्यक्त्योः पदार्थत्वं प्रतीयते, तथापि

---

१. न्यायदर्शने गौतमीयं सूत्रम्। २. महाभाष्ये स्वरूपसूत्रस्थम्, पा० सू० १।२।६४।
३. मञ्जूषाटिप्पणे आयुर्वेदीयकुब्जलक्षणमिदम्।
४. वै० मञ्जूषास्थमनुमानबोधकं वाक्यमिदम्; ५. वै० भूषणसारे नामार्थनिरूपणे।
६. पा० सू० १।१।६९; ७. पा० सू० १।२।६४।

"[1]कस्यचित् किञ्चिद् गुणभूतम्, किञ्चित् प्रधानम्" इत्युत्तरभाष्यपर्यालोचनया विशिष्टे शक्तिरवसीयते। अत्र विशिष्टवादे जातिशक्त्यैव ज्ञातया जातिव्यक्त्योरुपस्थितौ तात्पर्यात् कदाचिज्जातिर्विशेष्या व्यक्तिर्विशेषणम्, कदाचिद् व्यक्तिर्विशेष्या जातिर्विशेषणमिति। उक्तञ्च भाष्ये—"[2]जातिशब्देन हि द्रव्यमप्यभिधीयते जातिरपि"। सर्वत्रापि शक्तिग्रहे प्रकारतया पदार्थबोधाज्जातेः प्राधान्यमुच्यते। तथा च विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वेनोपजीव्यत्वाद् विशेषणीभूतजातावेव शक्तिरुचिता। तदुक्तम्—"[3]नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते"। अत एव व्यज्यते जातिर्ययेति व्युत्पत्त्या आश्रयस्य व्यक्तिरिति संज्ञा। तथा चाह—"[4]आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते" इति।

नन्वेवमं "गां दद्यात्", "व्रीहीनवहन्ति" इत्यादौ दानावहननकर्मत्वाद्यन्वयानुपपत्तिः, जातेस्तदन्वयायोग्यत्वात्। अत आह—व्यक्तिः पदार्थः। अत्र पक्षे व्यक्तिः शक्यार्थैव न लक्ष्यार्था। लक्ष्यार्थेऽप्रधानतया कर्मत्वाद्यन्वयायोगात्। तथा चोक्तम्—"[5]विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"। अथ च "गामानय" इति वाक्यप्रयोगानन्तरं प्रयोज्यवृद्धस्य गवानयनेन प्रवृत्तिदर्शनाद् व्यक्तावेव शक्तिर्गृह्यते। उक्तञ्च भूषणे—"[6]युक्तञ्चैतत्—व्यवहारेण व्यक्तावेव तद्ग्रहणात्। सम्बन्धितावच्छेदकस्य (सम्बन्धितावच्छेदिकायाः) जातेरैक्याच्छक्तिरप्येकैवेति न गौरवम्"। ननु व्यक्तौ गृहीताऽपि शक्तिर्लाघवादग्रे बाधिका स्यादिति चेत्, न, पूर्वं जातस्य लाघवमात्रेण बाधायोगात्। बाधो नाम अप्रामाण्यज्ञानम्" चन्द्रमण्डलादिप्रमाणं पूर्वमिन्द्रियेण गृहीतमपि ज्योतिःशास्त्रेण बाध्यते, न तु लाघवेन।

एवञ्च "[7]अग्नेर्ढक्" इत्यनेन विहितस्य ढक्प्रत्ययस्य जातेर्विधानाभावात् "[8]स्वं रूपं शब्दस्याशब्दसंज्ञा" इति सूत्रेण व्यक्तिरेवावगम्यते। तथा चोक्तम्—"[9]सामान्यस्य कार्ययोगो व्यक्तिद्वारक इति तेन तेनोच्चारितायास्तस्यास्तस्या व्यक्तेर्ढग् भवतीत्यर्थः सम्पद्यते"। व्यक्तिद्वारैव जातिर्ढगादि कार्याणि प्राप्नोति, न साक्षात्। तथा चोक्तं भर्तृहरिणा—

> "[10]स्वं रूपमिति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते।
> जाते कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते"॥ इति।

---

१. महाभाष्ये, पा० सू० १।२।६४;
२. महाभाष्ये, पा० सू० १।२।५८।
३ भूषणादिग्रन्थेषु नामार्थप्रकरणे न्यायवाक्यमिदम्;
४. वाक्यपदीये—१।९५।
५. कारिकांशोऽयं वै० भू० टी० दर्पणे;
६. वैयाकरणभूषणसारे नामार्थनिरूपणे।
७. पा० सू० ४।२।३३;
८. पा० सू० १।१।६८।
९. काशिका-पदमञ्जरी, पा०सू० १।१।६८;
१०. वाक्यपदीये ब्रह्मकाण्डे, का० ६८।

भाष्यकारेणापि जातिव्यक्त्योर्मध्ये व्यक्तेरेव नित्यत्वं स्वीकृतम्—"[1]आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव। आकृत्युपमर्देन द्रव्यमेवाऽवशिष्यते"।

व्यक्तीनामानन्त्येऽपि जातिरूपमेकं धर्ममुपलक्ष्य शक्तिग्रहः साध्यः। एतेनासम्बन्धव्यक्तेर्न बोधः। तथा चाह भूषणे—

**"आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।**
**शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति"** ॥ इति।

तथा हि—तद्धर्मप्रकारकोपस्थितिं प्रति तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्दज्ञानं कारणमिति कार्यकारणभावेन पदार्थोपस्थितिनिष्ठकार्यतानिरूपिता या तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्दज्ञाननिष्ठा कारणता, तन्निरूपिता या शक्त्यवच्छिन्ना शब्दनिष्ठा कारणतावच्छेदकता तस्या न व्यभिचरिष्यतीति यावत्।

अथवा माऽस्तु व्यक्तेर्भानम्, आनयनादिक्रिया केवलायां जातावसम्भवन्ती व्यक्तिसाहित्येन निष्पाद्यते, समाहारे पाणिपादसाहित्येन वादनक्रियावत्। तदुक्तम्—"[2]तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रे भाष्ये—"[3]आकृतावालम्भनादीनां सम्भवो नास्तीति कृत्वा तत्सहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते"। तद्यथा—"अग्निरानीयताम्" इत्युक्ते केवलस्याग्नेरानयनासम्भवादचोदितमपि पात्रमानीयते। एतदेवाग्नेरानयनं यत्पात्रस्थस्य। तथाऽऽकृतावालम्भनादीनि चोद्यमानानि सामर्थ्यात् साहचर्याद् द्रव्यमभिनिविशन्ते। सर्व एवाऽऽकृतेर्योगोऽन्तर्भावितद्रव्याया इति[4]। तथा चोक्तम्—

**"संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रे ग्राह्यामथापरे।**
**जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते"** ॥

अस्यायमर्थः — अपरे आचार्याः सूत्रे "[5]स्वं रूपमिति" सूत्रे ग्राह्यां शब्दस्य स्वरूपेण जात्यात्मकेनाग्निशब्दत्वादिना संज्ञाभूतेन ग्राह्यां संज्ञिनीं व्यक्तिं तत्तदग्निशब्दरूपामिच्छन्ति। प्रदेशेषु "[6]अग्नेर्ढग्"त्यादिविधिप्रदेशेषु जात्या अग्निशब्दत्वादिरूपया संज्ञाभूतया प्रत्यायिताऽग्निशब्दरूपा व्यक्तिः कार्यार्थमुपतिष्ठत इत्यर्थः।

"ब्राह्मणं न हन्यात्", "सुरां न पिबेत्" इत्यादिवाक्यस्थले जातिरेव प्राधान्यं भजते। द्रव्यवाच्यत्वे हि ब्राह्मणत्वावच्छेदेन सकलब्राह्मणहिंसाप्रतिषेधो न स्यात्। एतच्च प्रतिपादितं महाभाष्ये—"[7]यदि द्रव्यं पदार्थः स्यादेकं ब्राह्मणमहत्वैकां च

---

१. महाभाष्ये पस्पशाह्निके;　　२. पा० सू० २।१।५१।
३. महाभाष्ये, पा० सू० २।१।५१;　　४. वाक्यपदीये ब्रह्मकाण्डे, का० ६९।
५. पा० सू० १।१।६८;　　६. पा० सू० ४।२।३३।
७. महाभाष्ये, पा० सू० १।२।६४।

सुरामपीत्वाऽन्यत्र कामचारः स्यात्"। अत उभावपि जातिव्यक्ती पदार्थौ, क्वचिज्जातेः प्राधान्यं व्यक्तिर्विशेषणम्, क्वचिच्च व्यक्तेः प्राधान्यं जातिर्विशेषणम्। अत एव—

"[1]एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थं इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः"॥

इत्यत्रैकमित्यनेन केचिज्जातिमिच्छन्ति। केचित्तु व्यक्तिमेव पदार्थत्वेनाभिप्रेत्य जातेरवच्छेदकत्वं स्वीकुर्वन्ति। एतेनोभावपि जातिव्यक्तो पदार्थौ। क्वचिज्जातेः प्राधान्यं व्यक्तेर्विशेषणत्वम्, क्वचिच्च व्यक्तेः प्राधान्यं जातेर्विशेषणत्वमिति।

लोके समेऽपि पदार्थास्तत्तत्प्रकारत्वेन प्रतीयन्ते। स च प्रकारः कैश्चित् प्राधान्येनाभिमतः, कैश्चिद् विशेषणत्वेनेति। इदमेव जातिपदार्थपक्षे व्यक्तिपदार्थ-पक्षे वा वैमत्यप्रतिवादकं निमित्तम्।

तथा चोक्तम्—"[2]उभयोरुभयं पदार्थः। कस्यचित्तु किञ्चित्प्रधानभूतं किञ्चिद्गुणभूतम्। आकृतिपदार्थकस्याकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्य-पदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता"। तदुक्तं दर्पणे—

"[3]तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदनात्।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु व्यवस्थितः"॥

इदमत्राकूतम्—धर्ममुपलक्षणीकृत्य शक्तिग्रहाद् वस्तुतस्तद्धर्माकृतिविशिष्टा व्यक्तिर्बुद्ध्यते, न तु तद्धर्मप्रकारेण। एतदेव जात्यादेरुपलक्षणत्वम्, यत् स्वाश्र-याणां स्वरूपतः शक्तिग्रहविषयत्वं सम्पाद्य स्वयं शक्तिग्रहाविषयो बोधाविषयश्च भवति, यथा "काकवन्तो देवदत्तस्य गृहाः" इत्यत्र काकः स्वोपलक्षिततृणत्वादिना तद्गृहमितरेभ्यो व्यावर्त्तयति, तथा जातिर्व्यक्तोरुपस्थाप्य स्वोपलक्षिताभि-र्व्यक्तिभिः शक्तिमितरेभ्यो व्यावर्त्तयति। एवञ्च शक्यव्यक्तीनामानन्त्येऽपि उपलक्षणी-भूतघटत्वादिजातेरैक्याच्छक्तेरैक्यम्, कारणताया निरूपकाश्रयव्यक्तिबाहुल्येऽप्य-वच्छेदकदण्डत्वादेरैक्यवत्। शक्यतावच्छेदकभेद एव शक्तेर्भेद इति नास्त्यानन्त्य-शक्तिकल्पनगौरवम्।

अपि च "[4]तस्माच्छसो नः पुंसि", "[5]आङो नाऽस्त्रियाम्", "[6]ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यादिप्रामाण्येन "मेधा, वाग्, मधु" इत्यादौ प्रकृतिमात्रेण

१. वै० भू० सारे नामार्थनिरूपणे, का० २५ ;
२. महाभा०, पा० सू० १।२।६४।
३. वै० भू० द० टी० नामार्थप्रकरणे ;
४. पा० सू० ६।१।१०३।
५. पा० सू० ७।२।१२० ;
६. पा० सू० १।२।४७।

पुंस्त्वादेर्बोधेन च लिङ्गमपि प्रातिपदिकार्थः। तथा च भूषणे—"[1]त्रिकमिति जाति-व्यक्ति-लिङ्गानीत्यर्थः"। नागेशेनाप्युक्तम्—"[2]लिङ्गमपि नामार्थ एव। प्रत्ययार्थत्वे हि स्त्रीत्वस्य स्त्रिया वा प्राधान्यापत्तिः।

व्यक्तिशक्तावपि स्त्रीतादात्म्यापन्नाऽजाबोध एवानुभवसिद्धः, न त्वजा-तादात्म्यापन्नस्त्रीबोधः"। अत एव "पशुना यजेत" इति वाक्यान्तर्गतः पशुशब्दो नाभावेन पुंस्त्वबोधनात् स्त्रियां नास्तीति हेतोः "पशुना यजेत" इति विधिर्न छाग्यादीन् यज्ञाङ्गत्वेन प्रयोजयति। पशुशब्दस्य पुंस्त्वं व्याकरणशास्त्रे "[3]उका-रान्तः पुंसि" इति शिक्षासूत्रेण निर्णीतम्। मीमांसायान्तु "अग्निषोमीयं पशुमालभेत" इत्यनेन ज्योतिष्टोमं प्रकृत्य पश्वालम्भनं विधीयते। तत्र पशुपदोपादानात् "[4]पशुचोदनायामनियमोऽविशेषात्" इति सूत्रेण यस्य कस्यचित् पशोर्ग्रहण-माशङ्क्य "[5]छागो वा मन्त्रवर्णात्" इत्यनेन छागस्यैव ग्रहणं नान्यपशोरिति निर्णीतम्।

यद्यपि भाष्यादिषु लिङ्गबोधकम्—

**"[6]स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम्"॥**

इति लक्षणं ख्यातम्, तथापि खट्वादिजडपदार्थेष्वस्य लक्षणस्याव्याप्तिग्रस्तत्वात् सत्त्वादिगुणानामुपचयापचयादिनैव लिङ्गमवबुध्यते। सत्त्वरजस्तमसां प्राकृतगुणानां वृद्धिः पुंस्त्वम्, अपचयः स्त्रीत्वम्, स्थितिभावं नपुंसकत्वम्। अत एवोत्कर्षापकर्षसत्त्वेऽपि स्थितिमात्रमादाय "[7]सामान्ये नपुंसकम्" इत्युद्घोषः। उत्कर्षापकर्षसाम्यावस्थात्रय-साधारणस्थितिमात्रविवक्षायां नपुंसकं भवतीति तदर्थः। तथा चोक्तम्—

**"[8]आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।**
**धर्मा मूर्त्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः"॥** इति।

भर्तृहरिस्तु जातेरेव लिङ्गबोधकत्वमभिमन्यते—

**तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः।**
**अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः॥**
**हस्तिन्यां वडवायां च स्त्रीत्वबुद्धेः समन्वयः।**
**अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्[9]॥**

---

१. वै० भू० नामार्थप्रकरणे; २ वै० मञ्जूषायां नामार्थप्रकरणे; ३ शिक्षा० सू० ५१।
४. मी० सू० ६।८।३०; ५. मी० सू० ६।८।३१; ६. महाभाष्ये, पा० सू० ४।१।३।
७. लिङ्गबोधकं वाक्यम्; ८. वाक्यपदीये—३।१३।१३; ९. वाक्यपदीये—३।१३।४-५।

अत एवैकस्मिन्नपि "अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु" इति लिङ्गत्रय-प्रतीतिः। एवञ्च समानानुपूर्वीकेषु तटादिषु लिङ्गत्रयम्, छागादिषु लिङ्गद्वयम्, पदार्थादिष्वेकमिति सर्वत्र मुख्य एव लिङ्गव्यवहारः। जात्यादिभेदेन भिन्ना ये शब्दास्तेषु शब्देषु स्थितं यल्लिङ्गं तत् स्वाश्रयशब्दवाच्यम्।

"[१]द्व्येकयोर्द्विवचनैकवचने", "[२]बहुषु बहुवचनम्" इति सूत्रप्रामाण्येन विभक्तिहीनेन "दधि, मधु" इत्यादिशब्देन संख्याबोधाच्च संख्याऽपि प्रातिपदिकार्थः। तथा चोक्तं भूषणे—"[३]चतुष्कं–संख्यासहितं त्रिकमित्यर्थः"। यद्यपि अन्वयव्यतिरेकाभ्यां विभक्तीनामेव संख्यावाचकत्वकल्पनमुचितम्, तथापि "दधि मधु चानय" इत्यादौ विभक्तिं विनाऽपि संख्याकारकप्रतीत्या व्यतिरेकव्यभिचारात् तदौचित्यं हेयमेवेति।

एतच्च प्रतिपादितं महाभाष्ये—"[४]तद्यथा—गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति। एवमिहापि यदसौ द्रव्यं श्रिताऽऽकृतिस्तस्य यल्लिङ्गं वचनं च तदाकृतेरपि भविष्यति"। अतः संख्याऽपि प्रातिपदिकार्थ एव तत्तद्विभक्तिसमभिव्याहारे तस्या द्योतकत्वमिति।

अथ च "[५]कर्मणि द्वितीया" "[६]कर्तृकरणयोस्तृतीया" इत्यादिकारकबोधकसूत्रप्रामाण्येन 'दधि मधु च भुङ्क्ष्व' इत्यत्र विभक्तिमन्तरेणापि कर्मत्वादेर्भानात् कारकमपि प्रातिपदिकार्थः।

तथा च प्रातिपदिकेनैव संख्याकारकयोरप्यभिधाने "कर्मणि वर्तमानात् प्रातिपदिकाद् द्वितीया, एकत्वे वर्तमानाद् एकवचनम्" इत्येवं तत्तदर्थस्य वाच्यतया तत्र च स्वादिसूत्रेणैव विभक्तेः सिद्धतया तेषां नियमत्वम्। [७]पञ्चकं कारकसहितं चतुष्कमित्यर्थः। तथा चोक्तम्—

**"[८]स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च।**
**अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः"** ॥ इति।

अयं भावः—जातिः, व्यक्तिः, लिङ्गञ्च प्रातिपदिकार्थाः, संख्या, कारकञ्च विभक्तेरर्थाविति केचित्। केचित्तु संख्याकारकेऽपि प्रातिपदिकार्थौ विभक्तिरुभयोर्द्योतिकेति मन्यन्ते। उक्तञ्च भूषणे—

१. पा० सू० १।४।२२; २. पा० सू० १।४।२१।
३. वैयाकरणभूषणसारे नामार्थप्रकरणे; ४. महाभाष्ये, पा० सू० १।२।६४।
५. पा० सू० २।३।२; ६. पा० सू० २।३।६५।
७. वै० भू० नामार्थप्रकरणे; ८. दर्पणादिटीकासूक्तेयं वा० प० का०।

"[1]द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" । इति ।

अत्र द्योतकतावादिनां पुनरयमाशयः — लिङ्गादिनिरूपिता घटादिशब्दे पृथक् पृथक् शक्तिरङ्गीकर्तव्या, एकपदोपस्थितानामप्यर्थानामाकाङ्क्षावैचित्र्यात् परस्परमन्वयः । तत्र लिङ्गसंख्ययोः प्रकृत्यर्थे विशेषणत्वम्, कारकस्य विशेष्यत्वम् । अथवा कारकस्यापि द्योतकत्वाद् विशेषणत्वम् । प्रातिपदिकस्य लिङ्गसंख्या-विशिष्टार्थकत्वे त्वेकत्वविशिष्टे द्वित्वादिविशिष्टे च शक्तिकल्पने गौरवम् । "गोरूपम्" इत्यादौ संख्याभानवच्चित्रबोधानुपपत्तिश्च । विशकलितपदार्थत्वपक्षे तात्पर्यग्राहकत्वाभावात् तादृशबोधनिर्वाह इति । यद्यपि शास्त्रेषु विभक्त्यादि-प्रत्ययानां द्योतकत्वं वाचकत्वं च सामान्यतयोपदिष्टम्, तथापि वाचकत्वापेक्षया द्योतकत्वमेव श्रेयस्करम् । वाचकत्वपक्षे कारकाणामुक्तानुक्तविचारो व्याहन्येत । तथा चोक्तम् "[2]अनेकमन्यपदार्थे" इति सूत्रभाष्ये—"[3]अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः" । नागेशेनापि—"[4]नामार्थप्रकारकबोधे सुबादिजन्योपस्थिति-र्हेतुः, इत्यादिकं विलीयेतेति चेत्, न, विभक्तिद्योत्यार्थमादायोपपत्तेः" । प्रत्ययानां द्योतकत्वेन प्रकृतेर्वाचकत्वं युक्तम् ।

विशेषणतया शब्दोऽपि शाब्दबोधे भासते । युधिष्ठिर आसीदित्यादौ युधिष्ठिर-शब्दवाच्यः कश्चिदासीदिति बोधात् । उक्तञ्च वाक्यपदीये—

"[5]न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" ॥ इति ।

एवं विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः । अनुकरणेनानु-कार्यस्वरूपप्रतीतिश्च भवति । अतो जात्यादिपञ्चकेन सह षोढा प्रातिपदिकार्थः । तथा हि—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम् । स्वसदृश-शब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम् । तत्रानुकार्यादनुकरणं भिद्यत इति तयोर्भेदविवक्षायामनुकार्यस्वरूपप्रातिपदिकत्वेनार्थवत्त्वात् प्रातिपदिकत्वात्स्वादिविधिः । अस्ति तावद् भेदपक्षज्ञापकः "[6]भुवो वुग्लुङ्लिटोः" इत्यत्र भुव इति निर्देशः । अनु-कार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदिकत्वम्, न वा पदत्वम् । तत्र ज्ञापको भू-सत्तायामिति निर्देशः । तथा चोक्तम्—

"[7]शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।
नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते" ॥ इति ।

---

१. वै० भू० नामार्थप्रकरणे ; २. पा० सू० २।२।२४ ।
३. महाभाष्ये, पा० सू० २।२।२४ ; ४. वै० भू० नामार्थप्रकरणे ।
५. वाक्यपदीये, का० १ ; ६. पा० सू० ६।४।८८ ; ७. वै० भू०, का० २६ ।

अयमाशयः —अभेदपक्षे स्वप्रत्यक्षरूपामुपस्थितिमादाय यथा शाब्दे शब्दस्य भानम्, तथैव 'घटमानय' इत्यादौ घटादिपदानामपि तां सामग्रीमादाय भानस्य दुर्वारतया शाब्दबोधमात्रस्य शब्दविषयकत्वसिद्धिः, तदुक्तं "[1]स्वं रूपम्" इति सूत्रे भाष्ये—"[2]शब्दपूर्वको ह्यर्थे सम्प्रत्ययः। आतश्च शब्दपूर्वकः। योऽपि ह्यसावाहूयते नाम्ना। नाम च यदानेन नोपलब्धं भवति, तथा पृच्छति—किं भवानाहेति। शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः। इह च व्याकरणे शब्दे कार्यस्य सम्भवः, अर्थेऽसम्भवः। तथा चाह—

"[3]ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते"॥ इति।

अतः षड्विधार्थबोधकं शब्दस्वरूपमेव "[4]अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यनेन प्रातिपदिकसंज्ञां भजते। क्वचिज्जातिमात्रमवगम्यते। क्वचिच्च जातिव्यक्तिरुभावपि। "[5]ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यादौ लिङ्गमपि प्रातिपदिकार्थत्वेनैव ज्ञायते। "[6]द्व्येकयोर्द्विवचनैकवचने", "[7]कर्मणि द्वितीया" इत्यादिप्रामाण्येन संख्याकारकेऽपि प्रातिपदिकार्थौ न तद्भिन्नाविति। यदा शब्देन शब्दमात्रमवभासते तदा शब्दोऽपि प्रातिपदिकार्थः।

शब्दशास्त्रं समालोच्य नामार्थोऽयं निरूपितः।
तथ्यातथ्यं विविच्यादौ न शिष्टं कस्यचिन्मतम्॥
पदवाक्यप्रमाणेषु यदुक्तं शास्त्रचिन्तकैः।
तदेवात्र समाख्यातं स्वानुभूत्याऽपि निश्चितम्॥
येऽप्यत्र कथिताः पक्षाः समेऽपि तत्त्वदर्शिभिः।
निरूपिताः स्वशास्त्रेषु यत्प्रसङ्गः समागतः॥ इति शम्।



१. पा० सू० १।१।६९; २ महाभाष्ये, पा० सू० १।१।६८।
३. वा० प०, का० ५५; ४. पा० सू० १।२।४५।
५. पा० सू० १।२।४७; ६. पा० सू० १।४।२२।
७. पा० सू० २।३।२।

# मीमांसादर्शनेऽपूर्वप्रामाण्यपरीक्षा

**डॉ० राममूर्तिचतुर्वेदी**

ऋग्वेद-प्राध्यापकः, वेदविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

❀❀❀

विदितचरमेव तत्रभवतां समेषां संस्कृतसाहित्यजुषां विदुषां यद् भारतीयास्तिकदर्शनेषु मीमांसादर्शनमन्यतमं स्थानं भजते, तथा चेदं चतुर्दशविद्यास्थानेष्वप्यङ्गीकृतम् । तद्यथा—

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्याया धर्मस्य च चतुर्दश ॥**

(याज्ञवल्य-स्मृ० आ० १३)

इदं मीमांसादर्शनं पूर्वोत्तरभेदेन द्विधा विभज्यते, तद्यथा—पूर्वमीमांसा उत्तरमीमांसा चेति, तत्र पूर्वमीमांसापदेन धर्मविचारशास्त्रं बोध्यते, अथ चोत्तरमीमांसापदेन ब्रह्मविचारशास्त्रमवगम्यते । अत एव महर्षिणा जैमिनिना पूर्वमीमांसायां **"अथातो धर्मजिज्ञासा"**, तथा च भगवता व्यासेन उत्तरमीमांसात्मके ब्रह्मसूत्रे **'अथातो ब्रह्मजिज्ञासा"** इति सूत्रितम् । शाब्दिकव्युत्पत्तिबलेनापि मीमांसाशब्दः पूजार्थक'मान्'धातोः जिज्ञासार्थे सन्प्रत्यये कृते निष्पद्यते, अत एव मीमांसापदेन वेदार्थविचारशास्त्रमुच्यते, तथा च पूर्वोत्तरमीमांसे वेदवाक्यार्थनिर्णयायैव सम्प्रवृत्त इति न तिरोहितं विदुषाम् ।

तत्र पूर्वमीमांसायां महर्षिणा जैमिनिना प्रायोऽधिकरणेषु विधिवाक्यान्यर्थवादवाक्यान्युदाहृत्य वेदार्थविचारः प्रवर्तितः । उत्तरमीमांसायाञ्च भगवता व्यासेन मन्त्रब्राह्मणात्मकवेदान्तर्गतान्युपनिषद्वाक्यान्युदाहृत्य वेदार्थविचार उपन्यस्तः । वैदिकौपनिषदीयविचारविषयत्वादियमुत्तरमीमांसा 'वेदान्तदर्शन'मित्यपराभिधानेन संस्कृतवाङ्मये प्रसिद्धिमगात्, यथा—वेदान्तो नाम उपनिषत्प्रमाणमिति वेदान्तसारे स्वामी सदानन्दो ब्रूते । तथा च पूर्वमीमांसा एव मीमांसादर्शनपदेन प्रसिद्धिमुपगता ।

अत्र मीमांसादर्शने अपूर्व-नामा कश्चित् पदार्थविशेषः शक्तिर्वा स्वीक्रियते मीमांसकैः। तस्यैवापूर्वपदार्थस्य मान्यप्रमाणेन परीक्षणमेवास्य निबन्धस्य मुख्यमुद्देश्यम्। तत्रायमपूर्वो यागजन्यः कर्मजन्यो वा भवतीति पक्षमुररीकृत्य प्रथमतो यागस्वरूपं समासेन विविच्यते।

तत्र श्लोकवार्तिके पूज्यपादेन कुमारिलभट्टेन मीमांसाशास्त्रस्य प्रयोजनमुक्तं यत्—

**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्**[1] ॥ इति।

एतेन ज्ञायते यद् धर्मविचार एव मीमांसादर्शनस्य मुख्यं प्रयोजनमस्ति। अथ को धर्मः? इति जिज्ञासायामर्थसङ्ग्रहे लौगाक्षिभास्करेणोच्यते यद् यागादिरेव धर्मः, तल्लक्षणञ्च वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म इति। कथं यागादिरेव धर्मः, नान्य इति चेदुच्यते यद् भगवती श्रुतिरेव यागादीनां प्राथम्येन धर्मत्वं प्रतिपादयति। तद्यथा—

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्[2]। एतेनेदमायाति यद् याग एव प्रथमो धर्म इति। अस्यैव धर्मरूपस्य यागस्य वेदप्रतिपाद्यत्वं प्रयोजनवत्त्वमर्थवत्त्वञ्च लक्षणमुपपन्नं जायते। 'यागादिरेव धर्मः' इत्यत्र आदिपदेन दानहोमादयो द्रव्यगुणादयश्च गृह्यन्ते, ते सर्वे यागरूपतया धर्मपदवाच्या भवन्ति।

**यज्ञो वै श्रेष्ठतमं कर्म।** ( शतपथ-ब्रा० १।७।१।५ )
**वेदा हि यज्ञार्थमभिप्रवृत्ताः।** ( विष्णुधर्मोत्तर-पु० ९।१०४)
**फलयुक्तानि कर्माणि।** ( कात्यायनश्रौतसूत्रम्—१।२ )

इत्यादिशास्त्रवचनैर्यागादिरूपकर्मणः श्रेष्ठत्वं तस्य नितरां फलोपेतत्वञ्च प्रतिपाद्यते। भगवता बादरायणेन वेदविहितकर्मणामवश्यं फलकत्वेऽपि तेषां फलप्रदाता ईश्वरो मन्यते, परन्तु महर्षिजैमिनिस्तु कर्मणः फलदाता कर्मैव मनुते। वेदान्तदर्शनानुसारं कर्मत्यागानन्तरमेवात्मज्ञानं जायते; परन्तु मीमांसादर्शनं "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति प्रत्यक्षया श्रुत्या सर्वजनैरपि यावज्जीवनं कर्म कर्त्तव्यमेवेत्युपदिशति। गीतायां भगवता कृष्णेनाप्युपदिष्टम्, यत्—

---

१. श्लोकवार्तिकम्, श्लो० ११।
२. शु० य० सं० ३१।१६ ऋ० सं० १०।४०।१६।

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥** (१८।३)

मीमांसादर्शनानुसारं वेदविहितानि कर्माणि सामान्यतया नित्य-नैमित्तिक-काम्य-निषिद्धभेदात् चतुर्विधा विभक्तुं शक्यन्ते। तत्र नित्यं कर्म, यथा सन्ध्योपासनादिः। "अहरहः सन्ध्यामुपासीत" इति विधिवाक्येन सन्ध्योपासनरूपं कर्म द्विजातीनां कृते नित्यतया विधीयते। यद्यपि नित्यकर्मणोऽनुष्ठानेन कश्चित् फलविशेषो न श्रूयते, तथाप्यकरणे प्रायश्चित्तरूपप्रत्यवायश्रवणान्नित्यं कर्म सर्वदैवानुष्ठेयमिति वेदेनानुशास्यते। एवमेव किञ्चिन्निमित्तमधिकृत्य यत्कर्म विधिना विधीयते, तन्नैमित्तिकं कर्म उच्यते, यथा जातकर्म-श्राद्धादिः। एवमेव यत्कर्म स्वर्गादिरूपं फलमभिलक्ष्य विधिना विधीयते, तत्काम्यं कर्म उच्यते, यथा ज्योतिष्टोमादिः। एवमेव "न कलञ्जं भक्षयेत्", 'ब्राह्मणो न हन्तव्यः' इत्यादि-निषेधवाक्यैर्नरकाद्यनिष्टसाधकं कर्म निषिद्धं कर्म उच्यते।

अत्रेदं विचार्यते यत् "ज्योतिष्टोमेन स्वर्गकामो यजेत", "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "उद्भिदा यजेत पशुकामः" इत्यादिवाक्यैः स्वर्गादिरूपं फल-मधिगन्तुमेव ज्योतिष्टोमादीनां यज्ञानामनुष्ठानं वेदेन विधीयते; परन्तु ज्योतिष्टोमादि-यागानुष्ठानानन्तरमेव स्वर्गादिरूपं फलं नैवोत्पद्यते, अपि तु वर्तमानदेहत्यागानन्तर-मेव यागकर्तुस्तत्फलं प्राप्यते। अतोऽत्रायं प्रश्नः समुदेति यत् फलयागयोः कार्यकारण-सम्बन्धात् कथं कारणोत्तरकालं कार्यं नोत्पद्यत इति ?

अत्र मीमांसकानामेष राद्धान्तो यद् अस्त्येकाऽपूर्वनामिका शक्तिविशेषा, या कर्मणां फलानि रक्षति। सैव शक्तिर्यागजन्या सती यागफलयोर्मध्येऽदृष्टरूपेण फल-प्रदानकालं यावत् स्थिता भवति। अखिलान्यपि वेदविहितानि कर्माणि फलयुक्तानि भवन्तीत्येषोऽस्ति नियमो मीमांसकानाम्। तत्रैषाऽपूर्वनामिका शक्तिरेव तस्य व्यापकस्य नियमस्य साधिका भवति। अत एव यागादिकर्मणोऽस्तित्वाभावे अद्यतनं कृतं यागादिकं कर्म केन प्रकारेण लोकान्तरे स्वर्गादिफलं दातुमर्हतीत्यत्र जिज्ञासायां मीमासंकाः समादधते यद् अद्यतनं कृतं यागादिकं कर्म यागकर्तुरात्मनि काचिद-पूर्वाख्यामदृष्टशक्तिमुत्पादयति सैव शक्तिः समाप्ते सति वर्तमानजीवने लोकान्तरे यजमानाय तत्तत्कर्मफलानि यथाक्रमं प्रदाय तिरोहिता भवति। तद्यथा—

**यागादेव फलं तद्धि शक्तिद्वारेण सिद्धयति।**
**सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते॥**
**कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।**
**योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते॥**

(तन्त्रवार्तिके, पृ० ३६४-३६५)

जैमिनीयन्यायमालायामपि सदसद्भावसंशयमुद्भाव्य पूर्वोत्तरपक्षाभ्यां यागजन्या काचिददृष्टशक्तिरेवापूर्वपदार्थं इति सिद्धान्तितम् । तद्यथा—

**अपूर्वंसदसद्भावसंशये सति नास्ति तत् ।**
**मानाभावात् फलं यागात् सिद्धयेच्छास्त्रप्रमाणतः ॥**
**क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम् ।**
**विरुद्धमान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम् ॥**
**अवान्तर्व्यापृतिर्वा शक्तिर्वा यागजोच्यते ।**
**अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम् ॥**

( जै० न्या० मा० वि० २।१।२ )

अधिकरणेऽस्मिन् पूर्वपक्षिणा प्रोक्तं यद् अपूर्वसद्भावे मानाभावाद् विनश्वरस्य यागकर्मणः कालान्तरभावि स्वर्गसाधनत्वमनुपपन्नमिति सिद्धान्तपक्षिणा तदोच्यते यद् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति विधिवाक्ये तृतीयया श्रुत्या यागस्य स्वर्गसाधनत्वं श्रूयते, तच्च यागजन्यापूर्वशक्तिकल्पनद्वारैवोपपन्नं जायते । न चापूर्वे कल्पिते तस्यैव स्वर्गसाधनत्वाद् यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येतेति वाच्यम्, यागावान्तररूपेणापूर्वशक्तेः स्वीकारात् । न हि "कुठारेण छिनत्ति' इत्यस्मिन् वाक्ये उद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति । एवञ्च यथा अङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते, तथैव यागजन्यमपूर्वं नष्टेऽपि यागे यागकर्तुरात्मन्यनुवर्तत एव ।

एवं रीत्याऽपूर्वमिदं दर्शपूर्णमासयागे पूर्वाचार्यैश्चतुर्विधं प्रदर्शितम् । तच्च फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमङ्गापूर्वञ्चेति । सम्प्रदायसिद्धयागप्रक्रियायां प्रथमं तावत् फलवाक्येन यागकर्मणः फलसाधनता बोध्यते, यथा—यागेन स्वर्गं भावयेदिति । कथं विनश्वरेण यागेन फलमवाप्तव्यमिति जिज्ञासायामपूर्वं कृत्वेत्युच्यते । कथमपूर्वमुत्पाद्यत इत्यपेक्षायां यागानुष्ठानप्रकारेणेति वक्तव्यम् । अत एव दर्शपूर्णमासानुष्ठाने पूर्वोक्तानि चतुर्विधान्यपूर्वाण्युत्पद्यन्ते । तत्र येन स्वर्गरूपं फलमधिगम्यते, तत्फलापूर्वं कथ्यते, परमापूर्वमित्यस्यैव नामान्तरम् । अपि चामायां पूर्णिमायाञ्च त्रयाणां यागानामेकैकः समुदायो भवति, तद्भिन्नकालवर्तिसमुदायद्वयजन्यमपूर्वद्वयमुत्पद्यते । एवमेव तयोः समुदाययोरेकैकस्यारम्भाय एकैकसमुदायवर्तिनां त्रयाणां यागानां भिन्नकालवर्तित्वेन संघाताभावाद् यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि प्रादुर्भवन्ति । तेषां त्रयाणामपि यागानामङ्गोपकारमन्तरेण निष्पत्त्यभावाद् अङ्गानामनेकक्षणवर्तिनां संघातासम्भवाद् अनेकान्यङ्गापूर्वाण्युत्पद्यन्ते ।

अत्रेदमवधेयं यद् यान्यङ्गानि साक्षात् परम्परया वा प्रधानयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगीनि भवन्ति, तानि सन्निपात्योपकारकाण्युच्यन्ते। यथा—व्रीह्यादिद्रव्याणि, तत्संयुक्तावहननप्रोक्षणादीनि, अथ चाग्न्यादिदेवता-तत्संयुक्तयाज्यानुवाक्यानुवचनादीनीति। एवमेव यान्यङ्गानि यजमानात्मसमवेत-तयाऽपूर्वजनकानि भवन्ति, तान्यारादुपकारकाण्युच्यन्ते। यथा प्रयाजाज्यभागानु-याजादीनि, एतानि द्रव्यगतं देवतागतं वा संस्कारं न जनयन्ति; किन्तु आत्मगतमदृष्टं जनयन्ति।

एवं रीत्या सत्यपि प्रकारभेदे सर्वाण्यपूर्वाणि परमापूर्वनिष्पत्तौ साक्षात् परम्परया वा व्याप्रितानि भवन्ति, तत्पश्चादेव परमापूर्वं स्वर्गादिरूपं फलमुत्पादयितुं प्रभवति। तथानेन क्रमेण सर्वविधानामपूर्वाणां प्रकृतितया यागादिकं कर्म स्वर्गादि-फलानां साधनतामुपैति।

अतः परमिदमपूर्वं मीमांसासम्मतप्रमाणेषु केन प्रमाणेन साधयितुं शक्यत इत्यत्रास्ति प्रामाण्यपरीक्षावसरः। तत्र भाट्टमीमांसकाः षट् प्रमाणानि मन्यन्ते। तद्यथा—प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धरूपाणीति। प्राभाकरास्तु परमानु-पलब्धिप्रमाणं नाङ्गीक्रियन्ते। मीमांसायाः प्रमाणषट्कमधिकृत्य प्रायेण त एव विचाराः क्रियन्ते, येऽद्वैतवेदान्तस्य मते विचारिता भवन्ति। अत्र मीमांसादर्शन-सम्मतेन प्रतिप्रमाणेनापूर्वस्य परीक्षणं मन्येऽतिविस्तृतं निबन्धकलेवरमपेक्षते, अतो येन प्रमाणेन मीमांसका अपूर्वं साधयन्ति, तदेवात्रालोच्यते। तच्चास्ति 'अर्थापत्ति-प्रमाणम्'। अत्र मीमांसकाः "अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पन-मर्थापत्ति"रिति अर्थापत्तेर्लक्षणं कुर्वन्ति, तथाऽनेनैवार्थापत्तिप्रमाणेनापूर्वं प्रमाणयन्ति, अपि च तेऽर्थापत्तेर्दृष्टार्थापत्तिः श्रुतार्थापत्तिरिति भेदद्वयं प्रतिपादयन्ति। तदनुसारं यया दृष्टार्थ उपपन्नतां प्रतिपद्यते सा दृष्टार्थापत्तिः, अथ च यया श्रुतार्थ उपपन्नतां प्रयाति सा श्रुतार्थापत्तिर्भवति। दृष्टार्थापत्त्यां वस्तुन उपपत्त्यै अर्थान्तरं कल्प्यते, यथा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रौ भुक्तः स्यादित्यर्थान्तरस्य कल्पना क्रियते। एवञ्च श्रुतार्थापत्त्यां वस्तुन उपपत्त्यै शब्दान्तरं कल्प्यते, यथा—'पिधेहि' इत्येतत्पदमाकर्ण्य 'द्वारम्' इति पदान्तरं कल्प्यते।

एवं रीत्या 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिषु वाक्येषु श्रुतार्थस्य स्वर्गरूपफलस्योपपत्त्यै प्रत्यक्षयागादिकारण-व्यतिरिक्तं तज्जन्यमदृष्टमपूर्वरूपं कारणान्तरं कल्प्यते। अपूर्वमिदमदृष्टत्वात् प्रत्यक्षादिप्रमाणानामविषयः, अत एव मीमांसकमूर्धन्येन कुमारिलभट्टेनोक्तमपूर्व-प्रामाण्ये यत्—

**यत्तु प्रत्यक्षाविगम्यत्वमस्य नास्तीति सत्यम्।**
**श्रुतार्थापत्तिव्यतिरिक्तैर्न गम्यते स त्वदोषैः॥** इति।

( तन्त्रवार्तिके, पृ० ३६४ )

अपि च न्यायकोशकारेणाप्यपूर्वस्यादृष्टत्वं स्वर्गसाधनत्वञ्चाङ्गीकृतम्। तन्मते—यागादिजन्यः स्वर्गादिजनकोऽदृष्टः कश्चन गुणविशेषोऽपूर्वपदार्थ इति।



# भारतीयदर्शने ब्राह्मण-श्रमणधारयोर्विकासक्रमः

डॉ० हरिप्रसाद-अधिकारी
प्राध्यापकः,
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी

❁❁❁

**(क) ब्राह्मणधारा**

अखिलेऽस्मिन्संसारे सृष्टिकालादारभ्येदानीं यावत् प्रचलत्यविच्छिन्नश्चिन्तनक्रमः। असान्तो मानवः। असान्ता चेयं संसृतिः। अस्यैव वैचित्र्यपरिपूर्णस्य भवगह्वरस्य मूलरहस्यं ज्ञातुकामो मानवो यत्किमप्यचिन्तयत्, तदेव दर्शनशब्दवाच्यतां गच्छतीति प्रमाणयत्ययं श्लोकः —

**सम्पूर्णायाः दृश्यसृष्टेर्यद्भवेन्मूलकारणम्।**
**तज्जिज्ञासा तदर्थञ्च प्रयत्नो दर्शनं स्मृतम्[1]॥**

तच्च परमतत्त्वजिज्ञासाविषयकं चिन्तनं स्वस्वस्थानस्थितैः सर्वैरेव विश्वदार्शनिकैः कृतमिति सुविदितं तथ्यं विदुषाम्। अमुस्मिन् विश्वचिन्तनक्रमेऽपि भारत-ग्रीस-यूनान-चीनदेशाः स्वस्वाग्रत्वं संसाधयामासुः समये समये। भारतवर्षेऽस्मिन् न केवलमेकस्यैव चिन्तनक्रमस्य विकासो जातः, अपि त्वत्र सहस्रशो चिन्तनधारा विचारसरण्यो वा समुद्भूताः। भारतभूमौ समुत्पत्तिकारणात्तेषां चिन्तनानां "भारतीय"शब्देन बोधो जायत इत्यामन्यन्ते चिन्तकाः[2]।

सर्वप्रथममत्र प्राचीनर्षीणां मनसि जीवेश्वरजगद्विषयिका जिज्ञासाः प्रादुरभवन्। वेदोपनिषत्प्रभृतिप्राचीनब्राह्मणग्रन्थेषु सर्वत्रैव तत्त्वजिज्ञासासंवलिता मन्त्रा दृष्टिपथमायान्ति[3]।

---

१. पाश्चात्यदर्शनम् ( त्र्यम्बक-आत्मारामभण्डारकरप्रणीतम् ) पृ० १।

२. भारतीयदर्शनम् ( वी० एन० सिंहस्य ) भूमिकायाम्।

३. केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति॥ (प्रश्नोपनिषद्—१)

**ब्राह्मणलक्षणम्**

सर्वस्यैवास्य चिन्तनक्रमस्य ब्राह्मणनिष्ठत्वाद् धारेयं ब्राह्मणधारेति प्रथामलभत। ब्राह्मणाश्च सत्यवादिनः, वेददातारः, ज्ञानैकधनाः, अनिन्दकाश्च भवन्ति स्मेति ग्रन्थेषूपलभ्यते[१]। चतुर्वर्णयुते समाजे ब्राह्मणा मुख्या आसन्। परम्परायामस्यां पुरा ब्रह्मज्ञानयुतानामेव जनानां ब्राह्मणशब्दव्यपदेश आसीत्[२]। ब्राह्मणाश्चैते सत्त्वप्रधानाः शमदमादिगुणयुक्ता भवन्ति स्म[३]। सर्वेषामेव ब्राह्मणानां वेदाध्ययनमनिवार्यमासीत्। वेदज्ञानविरहितानां समादरो नासीत् समाजे[४]।

ब्राह्मणानां चिन्तनप्रवृत्तौ कूटस्थतत्त्वस्वीकरणे च निम्नोक्ता हेतवः सम्भवन्ति—

(१) मनुष्येण नैव शक्यते जीवनं चालयितुं सन्देहसीम्नि सुबद्धेन।
(२) न च समधिगन्तुं शक्यते तत्त्वं केवलं शुष्कतर्कव्यापारेण।
(३) क्षणभङ्गुरेऽस्मिञ्जगति कस्यचनापरिवर्तनीयसंशयशून्यतत्त्वस्यावश्यकताऽप्यनुभूता।

एतासामेतदतिरिक्तानाञ्च समस्यानां समाधानाय समुद्भूता तत्त्वान्वेषणपरम्परा प्राचीनर्षीणां नेतृत्वे। यतो हीदमासीदसम्भवं यत्ते चिन्तनपरायणा महापुरुषा लोकोपकारादिभ्यः कर्मभ्यो नेत्रे निमील्य तिष्ठेयुरिति। अनादिकालात् समुद्भूता चिन्तनसरणिर्मानवसमस्याया निराकरणमृते समुच्छिन्नमूला भवेत्, परिणामश्च निराशावादे सर्वस्यापि जगत्प्रपञ्चस्य समाधानान्वेषणमपि नासीदीप्सितं परमर्षीणां तेषाम्। तर्कोऽप्यन्ते पर्वतखननाल्लब्धमूषकन्यायमनुकुर्वते, समलङ्करोति चान्ते श्रद्धागुणामेवाश्रयस्थलत्वेन[५]।

श्रद्धाभूमौ सम्प्रतिष्ठापितस्यास्य परमतत्त्वचिन्तनरूपसौधस्य झञ्झावातादिभ्यः परिरक्षणाय शनैः शनैस्तर्कफलकवेष्ठनप्रयासा अप्यजायन्त[६]। परम्पराया-

---

१. ब्राह्मणाः सन्तु शास्तारः पापात् पान्तु समाहिताः।
वेदानां चैव दातारः पातारः सर्वदेहिनाम्॥
२. ब्रह्म जानाति ब्राह्मणः। (बृहदारण्यकोपनिषदि प्रथमेऽध्याये)
३. शमो दमः तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानविज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥ (गीता—१८।४२)
४. योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
भूरिभारभराक्रान्तः स वै ब्राह्मणगर्दभः॥ (याज्ञवल्क्यस्मृतौ)
५. नैषा तर्केण मतिरापनेया। (कठोपनिषद्—१।२।९)
तुलनार्थं विज्ञप्तिमात्रतासिद्धिः—"तर्काविषयत्वात्" त्रिंशिकायाम्।
६. भारतीयदर्शनम्, द्वितीयो भागः पृ० १७।

मस्यां स्वर्गकामनया लौकिकभोगकामनया च बहुविधविधानयुतानि व्ययसाध्यान्यनुष्ठानानि च क्रियन्ते स्म। यज्ञे पशुवधोऽपि जायते स्म। नित्यकूटस्थतत्त्वस्वीकरणाच्चैते ब्राह्मणा आस्तिका आसन्। मान्यतेयं शनैः शनैर्वेदप्रामाण्यस्वीकरणे परलोकस्वीकरणे च रूपान्तरिता। युगेऽस्मिन्कर्मकाण्डस्यासीत् प्राधान्यम्। ब्राह्मणाः सुकृत-दुष्कृतयोः फलविपाके विश्वस्ता आसन्। हवनेन यज्ञकरणेन वा स्वर्गप्राप्तिः सुनिश्चिता मन्यते स्म[1]।

समाजे शनैः शनैरेतेषां प्राबल्यमवर्धत। यतो हि वेदविहितानुष्ठानानां ज्ञातारः समुपदेष्टारश्चासन्नेते ब्राह्मणाः। सर्वाधिकारप्राप्तिकारणात्पुरोहिताश्चेमे सङ्कीर्णविचारयुताः स्वार्थसाधनपरायणाश्च सञ्जाताः कालक्रमेण। तैः स्वात्मनां भूदेवत्वं प्रतिष्ठापयितुमप्ययत्यत।

वर्णाश्रमव्यवस्थाऽपि जटिलतरा जाताऽस्मिन्समये। फलतो बहुप्रपञ्चयुतकर्मकाण्डान् प्रति लोकानामनास्था समुत्पन्ना। ब्राह्मणधारायामेव प्रतिक्रियारूपेणाश्रूयन्त कर्मकाण्डनिन्दनपरा ध्वनयोऽपि। एवमेव यज्ञे पशुवधादिविषयेऽपि मतभेदाः समजायन्त। यज्ञादीनां कर्मकाण्डानां हीनत्वं ब्रह्मज्ञानस्य च महत्त्वप्रतिपादनपराः स्वरा मन्दं मन्दं मुखरीभूताः। कालश्चासीदयमुपनिषदाम्। कालेऽस्मिन्कर्मकाण्डस्थाने ब्रह्मविद्याजिज्ञासामहत्त्वं प्रावर्धत[2]।

एवं रीत्या ब्राह्मणधारेयं लोकविश्रुतसिद्धैः सेविता पोषिता संवर्धिता च वेद-वेदाङ्गारण्यकब्राह्मणसूत्रपुराणदर्शनस्मृत्यादिमार्गेभ्यः सञ्चरन्ती जनांश्चोपकुर्वती सत्सन्देशं चेशावास्यात्मकं वितरन्ती सह नाववत्वित्यादिभिः सन्देशैरेकत्वसूत्रं सङ्ग्रथयन्त्यविच्छिन्नप्रवाहा प्रवहतीदानीमपि[3]।

### (ख) श्रमणधारा

श्रमणशब्देनात्र विशेषतो बौद्धजैनयोर्ग्रहणम्। कालक्रमेणास्मिन्भारतवर्षेऽन्येऽपि विचारकाः समुद्भूताः। तेषु नवीनविचारसमुद्भावकेषु भगवतो गौतमबुद्धस्य

---

१. अथ य एतदेव विद्वानग्निहोत्रं जुहोति। (छान्दोग्योपनिषद्—५।२४।२)

२ अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वाधः स्थः प्रजानन्।
अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत॥
(कठोपनिषद्—१।१।२८-२९)

३. भारतीयदर्शनम्, द्वितीयो भागः, विषयप्रवेशे।

स्थानमतीवमहत्त्वपूर्णमस्ति[1]। वस्तुतस्तु ब्राह्मण-श्रमणधारेऽनादिकालादेवागच्छतः[2]। ब्राह्मणधारा नित्यवादसमर्थिकाऽऽसीत्[3]।

औपनिषदिका ऋषयः सत्यानन्दे चिदात्मनि कृतस्नाना आसन्[4]। परं बुद्धदेवस्तु शाश्वतवादमिमं नाङ्गीकरोत्। ब्रह्मानन्दरसपरिपूर्णे जगति तेन सर्वत्र दुःखमेवादृश्यत[5]। सर्वं क्षणिकं सर्वमनात्ममित्युद्घोषयता बुद्धेन तथाविधे नवीनचिन्तनविरहिते समाजेऽप्यभूतपूर्वा वैचारिकक्रान्तिर्विहिता। समाजे प्रौढित्वङ्गतामुच्चनीचादिव्यवस्थाञ्च सम्पूर्णयामास बुद्धदेवः। उच्चनीचादीनां निर्धारणे च कर्मैव निकषरूपेण स्वीकृतं तेन[6]।

अत्रेदं स्मरणीयं यद् बुद्धसमये शूद्रादीनां निम्नवर्गीयाणां स्थितिरतीवदयनीयाऽऽसीत्। शूद्रसमक्षं वेदपाठादीनां पूर्णनिषेध आसीत्। समानापराधस्य कृतेऽपि निम्नोच्चवर्णीयाणां कृते पृथक्-पृथग् दण्डव्यवस्थाऽऽसीत्[7]।

बुद्धसमये कर्मकाण्डप्राबल्याद् लोका नैकविधधार्मिकबन्धनेषु विश्वासेषु च निबद्धा आसन्। स्वतन्त्रचिन्तनस्याभावो वर्तते स्म। वेदप्रामाण्यमनङ्गीकृत्यात्मानञ्चोपेक्ष्य धर्ममार्गप्रचालनं नासीत् सरलम्। अत एव बुद्धस्य बहवः प्रतिपक्षिणोऽपि सञ्जातास्तदानीम्। तदपि तानविगणय्य सुगतेन संसारस्य क्षणभङ्गुरत्वं तृष्णामूलकत्वञ्च सम्यक् प्रतिपादितम्[8]।

मृतो जीवस्तृष्णावशादेव जगति पुनरायातीति तस्य कथनं सर्वहृदयग्राह्यं

---

१. महायानं ( शान्तिभिक्षुशास्त्रिप्रणीतम् ) प्रस्तावनायाम्।
२. बौद्धधर्म के विकास का इतिहास–प्रथमेऽध्याये।
३. महायानप्रस्तावनायाम्।
४. यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च विन्दति। (कठोपनिषद् –२।३।८)
५. को नु हासो किमानन्दो निच्चं पज्जलिते सति–बुद्धवचनम्।
६. जच्चा वसलो होति न जच्चा होति ब्राह्मणो।
कम्मुना वसलो होति कम्मुना होति ब्राह्मणो॥ धम्मपदम्।
७. महायानप्रस्तावनायाम्।
८. इदं खो पन भिक्खवे दुःखं अरियसच्चं, जन्मापि दुःखं, जरापि दुःखा, मरणमपि दुःखम्।
( महावग्गो—१ )

जातं तदानीम्[१]। कामादीनां तृष्णानां समूलं समुच्छेदनमेव निर्वाणप्राप्तिकरं जायत इति सुस्पष्टतया सन्देशयामास बुद्धदेवः[२]।

सम्यग्दृष्टयाद्यष्टाङ्गिकमार्गाणां चतुर्णामार्यसत्यानाञ्च श्रेष्ठत्वं जिनेन (बुद्धेन) स्वयमेव प्रतिपादितम्।

मग्गानट्ठङ्गिको सेट्ठो सच्चानं चतुरोपदा।
विरागो सेट्ठो धम्मानं द्विपदानाञ्च यक्खुमा[३]॥

**अव्याकृतानि**

अतीन्द्रियाणामात्मपरमात्मादीनां निरूपणे सुगतो नासीत् श्रद्धावान्। जीवेश्वर-जगद्विषयकप्रश्नानामव्याकृतत्वञ्च प्रतिपादितं तेन। यदि तत्कथनं श्लोकबद्धं क्रियेत, तर्ह्येवं वक्तुं शक्येत—

नैतेऽर्थयुक्ता न च धर्मयुक्ता न ब्रह्मचर्यादिविरागयुक्ताः।
निरोध-निर्वेद-शमैर्वियुक्ता अव्याकृता त्याज्यतमाः सुविज्ञैः[४]॥

अव्याकृतानां विवरणञ्चेत्थमस्ति—

१. किं लोका नित्याः सन्ति ?
२. किं लोका अनित्याः सन्ति ?
३. किं लोकाः सान्ताः ?
४. किं लोका अनन्ताः ?
५. किं जीव-शरीरेऽभिन्ने ?
६. किं जीव-शरीरे पृथग्भूते ?
७. किं मृत्योरनन्तरं तथागतो मुक्तो भवति ?
८. किं मृत्योरनन्तरं तथागतो न भवति ?
९. किं मृत्योरनन्तरं तथागतो भवति न भवति च ?
१०. किं मृत्योरनन्तरं तथागतो न भवति, न न भवति ?

---

१. नन्दि राग सहगता तत्रतत्राभिनन्दिनो सेयमिदं कामतण्हा, भवतण्हा, विभवतण्हा यो यं तण्हा पोनभविका। (मध्यमनिकाये)
२. सो तस्सायेव तण्हाय असेस विराम निरोधो चासो पटि निस्सागो मुत्ति अनालयो। (मध्यमनिकाये)
३. धम्मपदे।
४. चूलमालुक्यसूत्रे—६३ (मध्यमनिकाये) बौद्धदर्शने, पृ० ३-४।

यथा बाणपीडितजनकष्टनिवारणं विहाय बाणप्रक्षेपकजनविषयकजिज्ञासाकरणं न बुद्धिमत्तापूर्णमेवमेव संसारानलसन्तप्तजनदुःखनिवारणचिन्तनं त्यक्त्वा जगन्निर्मातृविषयकशास्त्रार्थकरणमपि सुतरां व्यर्थमिति प्रतिपादितं बुद्धेन[1]।

स्वदार्शनिकव्याख्याप्रसङ्गे प्रतीत्यसमुत्पादमुखेन कार्यकारणसिद्धान्तं स्वीचकाराद्वयवादी। अस्यामेव सुदृढतमायां पृष्ठभूमौ समस्तं बौद्धवाङ्मयं समुपकल्पितमिति वक्तुं शक्यते[2]।

इदमेव तथ्यं सुस्पष्टयन् वदति कश्चन बुद्धानुयायी—

ये धर्मा हेतुप्रभवा हेतुस्तेषां तथागतो ह्यवदत्।
तेषां च यो निरोध एवंवादी महाश्रमणः॥

पद्यमिदं बौद्धसंस्कृतौ ब्राह्मणेषु गायत्रीमन्त्रवत् प्रतिष्ठितमिति मन्यन्ते बहवो विचारकाः[3]।

यथा ब्राह्मणदर्शनेषु मोक्षविषये विभिन्नाः सिद्धान्ता दृश्यन्ते। तेषु चाद्वैतविशिष्टाद्वैतशुद्धाद्वैतद्वैतप्रकृतिपुरुषविवेकादयो मुख्याः सन्ति। एवमेव बौद्धदर्शनेऽपि माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिकादीनां भेदेन सन्ति बहवः सिद्धान्ताः। ब्राह्मणवाङ्मये प्रसिद्धे 'स्थितप्रज्ञ'स्थानेऽत्राहंत-बोधिसत्त्व-प्रत्येकबुद्धादीनां समुल्लेखः प्राप्यते।

अस्तु, कस्तावद् बौद्धानां मोक्षः? विषयेऽस्मिन्नाचार्याश्वघोषस्य कथनमतीवमहत्त्वपूर्णम्। यथा ज्वलन् दीपः स्नेहक्षयात् कामपि दिशमगत्त्वा शान्तिमेति। एवमेव तृष्णादिक्लेशरहितो मनुष्यो निर्वाणाख्यां परमां शान्तिमुपैति। यथाह सः —

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम्॥

एवं कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात्केवलमेति शान्तिम्[4]॥ इति।

एवं रीत्या बुद्धादिभिः प्रवर्तिता श्रमणधारेयं सर्वान् विश्वमानवान् सन्तर्पयामास। राजते सम्प्रत्यपि स्ववैशिष्ट्यप्रभावेण।

---

१. दी० नि०, पृ०, २८।

२. अस्मिन् सतीदं भवति, अस्योत्पादादयमुत्पद्यत इति इदं प्रत्ययार्थः प्रतीत्यसमुत्पादार्थः। (माध्यमिकवृत्तिः, पृ० ९)

३. महायानप्रस्तावनायाम्।

४. सौन्दरानन्दं महाकाव्यम्—१६।२८-२९।

**साम्य-वैषम्ये**

अथ ब्राह्मण-श्रमणदर्शनयोर्मुख्यतमानां साम्यवैषम्यादीनामत्रोल्लेखो विवेचनञ्च क्रियते—यद्यस्मिन्निरपेक्षो भूत्वा चिन्तनं क्रियेत तदा तूपर्युक्ते द्विप्रकारके चिन्तनधारे सुविशालाया भारतीयसंस्कृतिरूपाया नद्याः समुद्भूते स्तः। द्वयोरेवास्ति समुद्देश्यं तृषितजनसन्तर्पणम्। यथा क्षेत्रसिञ्चनकर्मणि सुसाफल्यदर्शनाद् नदी-धारायाः सार्थकत्वं सुस्पष्टमेवमेवानादिकालाद् बहुजनसन्तर्पणकर्मणि सुसाफल्यदर्श-नात् समुपयोगित्वं सुसिद्ध्यति द्वयोरेव।

नास्ति कश्चन गरीयान् लघीयान् वा। तदपि साधर्म्यवैधर्म्याभ्यां तत्त्व-ज्ञानान्निःश्रेयसमिति शास्त्रोक्तिमनुगच्छन्निदानीमेतयोर्विश्वविश्रुतयोश्चिन्तनक्रमयोः साधर्म्यवैधर्म्ये संक्षेपेण समुपस्थापयिष्येते[1]।

वेदानुसारेण ब्राह्मणसंस्कृतौ देवासुराणामस्तित्वं वर्णव्यवस्थाक्रमश्च सुसिद्ध्यतः[2]। एवमेव बहुदेवतानां समुल्लेखोऽपि वर्तते[3]। कालक्रमेण वेदेष्वपि जाति-वादादीनामप्राधान्यमथ च बहुदेवस्थाने एकब्रह्मस्थापना सञ्जातेति वेदवाङ्मयानु-शीलनेनावगम्यते[4]।

बौद्धपक्षे स्मरणीयमिदमस्ति यत् प्रारम्भे 'बुद्धः' सामान्यजन एवासीत्। तस्मिन् बहूनामलौकिकधर्माणां समावेशः परवर्तिकाले सञ्जात इति न तिरोहितं तथ्यं विदुषाम्[5]।

ब्राह्मण-श्रमणधारेऽनादिकालादेवागच्छतः प्रवृत्तिनिवृत्तिरूपे श्रेयःप्रेयरूपे वा। कतिपयविदुषां मतानुसारेण ब्राह्मणा आसन् प्रवृत्तिपरकाः श्रमणाश्चासन्निवृत्ति-वादिनः[6]।

इदमत्रावधेयं यद् ब्राह्मणधारायामपि प्रवृत्तिनिवृत्तिविषयकाणि चिन्तनानि प्रभूतरूपेण जातानि सन्ति। अतो ब्राह्मणाः केवलं प्रवृत्तिप्रधाना इति कथनं कियत्सत्य-

---

१. वैशेषिकदर्शनसूत्रपाठः, सूत्रम्—४।

२. ब्राह्मणोऽस्य मुखमासीत्। ( शुक्लयजुर्वेदस्य ३१ अध्याये )

३. स होवाच महिमान एवैषा एते त्रयस्त्रिंशत्वेन देवाः। (बृ० उपनिषद्-३।९)

४. सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चन। (छान्दोग्योपनिषद्—३।१४।१; अपि च कठोपनिषद्—३।२।१, केन० ३।४)

५. महायानप्रस्तावनायाम्।

६. बौद्धधर्मदर्शने ( आचार्यनरेन्द्रदेवस्य ) प्रथमेऽध्याये।

संवलितमित्यत्र समुद्भवति सन्देहः । विषयेऽस्मिन् विवेच्यतेऽत्र किञ्चित् । श्रेयमार्ग-महत्त्वं कठोपनिषदि सम्यक् चर्चितमास्ते । तद्यथा—

श्रेयश्च प्रेयश्च मनुष्यमेतत् तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते[१] ॥ इति ।

न केवलमेतदेव; अपि तु बहुत्र प्रेयमार्गोऽविद्यामार्गो वा निन्दितः, श्रेयमार्गो विद्यामार्गो वा सम्यक्प्रशंसितो वेदेषु । तद्यथा—

"अन्धं तमः प्रविशन्ति येऽविद्यामुपासते" । विद्ययाऽमृतमश्नुते । आचार्यशङ्करेणापि व्यासोक्तिमनुकुर्वता—

"द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावितः" ॥

प्रवृत्तिनिवृत्तिमार्गयोश्चर्चा कृताऽस्ति[२] ।

अस्तु, यदि नाम ब्राह्मणधारा केवलं प्रेयानुगामिन्यभविष्यत् तर्ह्येवं श्रेय-प्रशंसाऽत्र नामिलिष्यत् । कश्चात्र हेतुः ? कतिपयेऽन्वेषकास्तु श्रमणप्रभावेणैव ब्राह्मण-धारायामपि निवृत्तिपरकचिन्तनप्रादुर्भावोऽजायतेति मन्यन्ते । शोच्यमिदम्[३] ।

वस्तुतस्तु ब्राह्मणधारायां धर्मार्थकाममोक्षाख्यानां पुरुषार्थानामुत्तरोत्तरं श्रेष्ठत्वं प्रदर्शितमस्ति । कालिदासचाणक्याभ्यां तदुल्लेख इत्थं क्रियते—

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्[४] ॥

अपि च—

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति[५] ॥ इति ।

एवमेव सर्वत्रैव चतुर्थाश्रमस्य निवृत्तिलक्षणस्य, मोक्षस्य च महत्त्वं दरीदृश्यते । यावद्धि ब्राह्मणाः स्वधर्मपालनपूर्वकं कर्तव्याकर्तव्यविवेचने समुत्सुका आसन्, तावत् प्रजाः सुखमलभन्त । तच्चेत्थमुच्यते—

---

१. कठोपनिषद्–१।२।२, ईशावास्योपनिषद्-३।२ ( शाङ्करभाष्ये ) ।
२. अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । विद्ययाऽमृतमश्नुते । (ईशावास्योपनिषद्—९।११)
३ बौद्धधर्म के विकास का इतिहास, पृ० ९ ।
४ रघुवंशमहाकाव्यम्—१।८; ५, चाणक्यनीतौ ।

ब्राह्मणा से हि धम्मे हि किच्चा किच्चेसु उस्सुका ।
यावलोंके अवसितुं सुखमोधित्थयं पजा ।।
अट्ठचत्तालीस वस्सानि ब्रह्मचरियं चरिं सुते ।
संप्पियेनेव संवासं संगत्वा समरोचपुं[1] ।। इति ।

ब्राह्मणसमाजे पुत्रोत्पादनस्य महत्त्वमासीत् । एतेन तेषां प्रवृत्तिपरकत्वं परिलक्ष्यते[2] । अत्र जरत्कारुपितॄणां पौत्राभावेनाधोमुखावलम्बनात्मकं महाभारतीयाख्यानकमपि स्मर्तव्यम्[3] ।

एतद्विपरीतं नासीद् गार्हस्थ्यजीवनाचारस्तन्महत्त्वञ्च श्रमणधारायाम्, शनैः शनैर्ब्राह्मणधाराप्रभावेणात्रापि गार्हस्थ्यजीवनमहत्त्वं सञ्जातमित्यामन्यन्ते कतिपये पण्डितास्तु[4] ।

केचन विद्वांसः सौगतदर्शनं श्रुतिभ्य एव समुत्पन्नमिति प्रमाणयितुमीहन्ते । निदर्शनञ्चास्यास्ति—

जयन्ति पुण्याः श्रुतयो विशुद्धा या मातरो भारतदर्शनानाम् ।
न मौलिकं सौगतदर्शनञ्च श्रुतिर्हि सैषा जननी जिनानाम्[5] ।। इति ।

परमपरे सौगतदर्शनं श्रुतिविपरीतमिति वदन्ति । तत्त्वसङ्ग्रहकारो बौद्धविद्वान् शान्तरक्षितो बौद्धदर्शनं वेदमूलकं नैवामन्यत—

वेदमूलञ्च तन्नैव बुद्धानामुपदेशनम् ।
निष्कलङ्कं हि तत्प्रोक्तं सकलङ्कं श्रुतौ पुनः[6] ।। इति ।

विषयेऽस्मिन् डॉ० राधाकृष्णमहोदयानां मतमित्थमस्ति—"बुद्धेनोपनिषत्प्रतिपादिततत्त्वानामेव सर्वजनग्राह्यरूपेण प्रचारो विहितः[7]" ।

डॉ० राधाकृष्णमतखण्डनमित्थं विधीयते महापण्डितराहुलसांकृत्यायनेन—"अहो ! धन्याः सन्ति विद्वांसश्चेमे ( डॉ० राधाकृष्णन् इति भावः ), अवर्णनीया

---

१. सुत्तनिपाते ( ब्राह्मणधम्मोयसुत्ते ) ।

२. न हि धर्मफलैस्तात ! न तपोऽपि सुसञ्चितः ।
तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति वै ।। (महाभारतम्, आदिपर्व-१२।२४)

३. तत्रैव त्रयोदशाध्याये ।

४. बौद्धदर्शने वेदान्तप्रस्तावनायां च, बौद्धदर्शनमीमांसा, पृ० ३६६ ।

५. बौद्धदर्शने ( म० प० राहुलस्य ), पृ० ३६ ।

६. तत्त्वसंग्रहः, अतीन्द्रियार्थदर्शिपरीक्षा, श्लो० ३५९६ ।

७. भारतीयदर्शनं ( डॉ० राधाकृष्णन्महोदयस्य ) प्र० खण्डे, पृ० ३८५ ।

प्रतिभा चैतेषां यतो हि बुद्धादारभ्याष्टादशशताब्दीं यावद् महानेको भ्रमः प्रसृत आसीद् यत् सर्वेऽप्येतत्कालावच्छिन्ना दार्शनिका बुद्धमनात्मवादिनं वेदविरोधिनञ्चामन्यन्त।

नागार्जुनादयः सर्वे बौद्धदार्शनिकाः शङ्कररामानुजप्रभृतयो वैदिकदार्शनिकाश्चासन् दिग्भ्रमिताः। न केवलमेतदेव; अपि तु भ्रमोऽयं समस्तभूमण्डले प्रसृत आसीत्। परं श्रीमतां तत्रभवतां डॉ० राधाकृष्णमहोदयानां प्रयासेन भ्रमो दूरीभूतः, बुद्धश्चोपनिषत्प्रचारकः सुसिद्धः[१]।

अनया रीत्या ब्राह्मणश्रमणयोर्मूल एव वर्तन्ते विदुषां मतभेदाः। समाधानञ्चास्य न तथा सुकरम्। विशेषतः सर्वेषामेव दार्शनिकानां प्रवृत्तिः प्रायः स्वमतमण्डनरूपलक्ष्यं पुरस्कृत्यैव भवति शास्त्रेषु। अस्यां परिस्थितौ समालोच्यमानविषयस्थगुणेभ्यो नेत्रनिमीलनमपि सम्भवतीति प्रकटयति कश्चन चिन्तकः। तद्यथा—

हा! कीदृग् मूढता ह्येयं मन्मतं मत्प्रतिश्रुतम्।
सर्वेऽपि प्रतिपद्येरन् संशयीरन्न केचन[२]॥

अपि च—

मनुष्याणां स्वभावस्ते सत्यान्वेषणतत्पराः।
स्वार्थांशप्रेरिताः सन्तो मतभेदमवाप्नुयुः[३]॥ इति।

परं केचन गुणिनः परगुणपरमाणून् पर्वतीकृत्य निजहृदि विकसन्ति[४]। अस्माभिस्तु बहुविवादभरितेऽस्मिन् विषये केवलमिदमेव वक्तुं शक्यते यत्—"जगत्यस्मिन् प्रतिक्षणं पुरातनं नश्यति, नवीनञ्चास्तित्वमङ्गीकरोति। प्राचीनमृते नवीनं नवीनमृते च प्राचीनं नैव सिद्ध्यतः। सम्प्रति संसारे या हि प्रगतिः सर्वक्षेत्रेष्ववलोक्यते तत्र वर्तते सर्वेषामेव प्राचीननवीनानां पक्षप्रतिपक्षाणां विदुषां द्रव्याणाञ्च सुमहद्योगदानम्।

अनया दृष्ट्या क्षुद्रतमकणादारभ्य महत्तमवस्तुपर्यन्तं सकलं जागतिकं पदार्थजातं परस्पराश्रितं भवतीति परिस्फुटति। एकया दृष्ट्या कुत्रचित् साम्यमपरया दृष्ट्या च कुत्रचिद् भेदो भवत्येव।

---

१. बौद्धदर्शने ( म० प० राहुलस्य ), पृ० ३६।
२. उपदेशामृतम् ( आचार्यचन्दनमुनेः )।
३. पाश्चात्यदर्शनम् ( श्लोकमयम् ) श्रीभाण्डारकरप्रणीतम्—प्रस्तावनायाम्।
४. परगुणपरमाणून् पर्वतीकृत्य नित्यम्।
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥ ( भर्तृहरेर्नीतिशतके )

एवं रीत्यैवात्रापि केचन भेदाः कानिचन साम्यानि च दृष्टिपथमायान्ति। तान्यत्र संक्षेपेण प्रस्तूयन्ते—

१. ब्राह्मण-श्रमणयोः सर्वविदितं साम्यं कर्मफले विश्वासो वर्तते। यो यथा कर्म करोति तथा फलं प्राप्नोतीति विश्वासो वर्तते द्वयोरेव। बौद्धेषु नानाकर्मकरणेन नानाविधा मनुष्या जाता इति विश्वस्यते। तद्यथा—

"मञामि भन्ते बीजानं नाना करणे नाति। कम्मानं नानाकरणेन मनुस्सा न सब्बे समका[१]"। ब्राह्मणाश्च—"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति समानामेव विचारसरणिम् अनुसरन्ति[२]।

२. एवमेव पुनर्जन्मविषयेऽपि द्वयोरेवास्ति समानं मतम्। बौद्धदार्शनिकेन वसुबन्धुनोक्तम्—"यद् भविष्यद्भवफलं कुरुते कर्म तद् भवः"[३]। माध्यमिकवृत्तावपि लिखितम्—"पुनर्भवजनके कर्म समुत्थापयति कायेन वाचा मनसा च[४]"। नागसेनः पुनर्जन्मविषयकं मिलिन्दप्रश्नमेवं समुत्तरयति—आम्, महाराज! यो उपज्जति जानाति सो उपजिस्सामीति[५]। ब्राह्मणा अपि पुनर्जन्म स्वीकुर्वन्ति। तद्यथा—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप[६]॥

३. निर्वाणं तस्यानिर्वचनीयत्वञ्चोभयत्रैव समानतया स्वीकृतम्। ब्राह्मणा यथा—

अविज्ञातं विजानतां विज्ञातमविजानताम्।
अशब्दमस्पर्शमरूपमव्ययम् ॥

अपि च—

नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते[७]॥ इति।

एवमेव श्रमणा अपि बुद्धप्रतिपादितं निर्वाणरूपं तत्त्वमनिर्वचनीयमस्तीति साधयन्ति—

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम्।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्[८]॥

---

१. मिलिन्दपन्हपालि, पृ० ५२;    २. गीता—३।२०।
३. अभिधर्मकोशः—३।२४;    ४. माध्यमिकवृत्तौ ५६५ पृष्ठे।
५. मिलिन्दपन्हपालि पृ० ५८;    ६. गीता—४।५।
७. कठोपनिषद्—२।२।१२, केनोपनिषद्—२।३;    ८ मध्यमकशास्त्रम्—१८।९।

उपर्युक्तविवेचनाधारेण ब्राह्मण-श्रमणयोर्निर्विरोधं साम्यं सिद्धयति। केचन साम्यस्थलानि समुपस्थाप्यन्तेऽत्र—

(क) कर्मफले विश्वासः।

(ख) पुनर्जन्मनि विश्वासः।

(ग) मोक्षस्य परमपुरुषार्थत्वस्वीकारः।

(घ) निर्वाणस्यानिर्वचनीयत्वम्।

(ङ) संसारस्य दुःखपूर्णत्वसमर्थनम्[1]।

(च) दानमहत्त्वं परोपकारप्रशंसा च[2]।

अपि च श्रामणीयो महायानसम्प्रदायस्तु ब्राह्मणैः सह सुतरां साम्यं बिभर्ति। आचार्यशान्तिदेवप्रणीते बोधिचर्यावतारे भक्तिस्वरूपमेवं समुपवर्णितम्—

१. वन्दनम्, २. पूजनम्, ३. शरणगमनम्, ४. पापदेशना, ५. पुण्यानुमोदना, ६. बुद्धाध्येषणा, ७. याचना, ८. बोधिचित्तोत्पादः, ९. बोधिपरिणामना।

श्रीमद्भागवतमहापुराणेऽपि भक्तिर्नवधा प्रतिपादिता—१. स्मरणम्, २. कीर्तनम्, ३. पूजनम्, ४. पादसेवनम्, ५. अर्चनम्, ६. वन्दनम्, ७. दास्यम्, ८. सख्यम्, ९. आत्मनिवेदनम्।

न केवलमेतदेव, अपि तु साधारणे व्यवहारेऽप्येतयोर्वर्तते महत्साम्यम्। तद्यथा श्रमणाः —

अभिवादनसीलस्स निच्चं बद्धापचयिनो।
चत्वारो धम्मा बड्ढन्ति आयु वण्णो सुखं बलम्॥

(धम्मपदम्—८।१०)

ब्राह्मणाश्च—

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि तस्य वर्द्धन्ते आयुर्विद्या यशो बलम्॥ (मनुस्मृतिः-२।१२१)

---

१. दुःखमयाभिघाताज्जिज्ञासा तदपघातके हेतौ। ( सांख्यकारिका-१ )
अपि च इद खो पन भिक्खवे दुःखं अरिय सच्चं। ( महावग्गो, १।१५ )

२. तस्मात् करिष्यामि शरीरकेण तटप्रपातोद्गतजीवितेन।
संरक्षणं पुत्रवधाच्च मृग्या मृग्या सकाशाच्च तदात्मजानाम्॥

अपि च— ( जातकमाला, व्याघ्रीजातके )

ईशावास्यमिदं सर्वं यत्किञ्चिद् जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्। (ईशावास्योपनिषद्)

एतयोर्विकासक्रमस्य केचन विचारणीया अंशाः सन्ति, तेषां संक्षेपेण समुपस्थापनमेवं कर्तुं शक्यते[१]—

१. ब्राह्मणधारायां ब्रह्मस्वरूपम्—

(क) प्रारम्भिकं स्वरूपममानवीयं लोकोत्तरञ्च ।

(ख) सगुणरूपावताराणां माध्यमेन जनसमक्षं ब्रह्मणः प्रादुर्भावः ।

(ग) अधार्मिकान् प्रत्यवतारस्य कठोरो व्यवहारस्तेषां संहारश्च ।

२. श्रमणधारायां बुद्धस्वरूपम्—

(क) प्रारम्भिकं स्वरूपं पूर्णतो मानवीयं लौकिकञ्च ।

(ख) बुद्धस्वरूपविस्तारः, पूर्वजन्मकथामाध्यमेन ।

(ग) बुद्धे बुद्धत्वप्राप्तयेऽभ्यासरते जने च क्षमायाः परमं प्राधान्यम् ।

(घ) अपराधकर्तॄन् प्रत्यपि क्षमाभावो निरपवादोऽहिंसा च ।

**कानिचन मूलभूतवैषम्याणि**

| ब्राह्मणाः | श्रमणाः |
|---|---|
| (क) आत्मवादः । | (क) अनात्मवादः । |
| (ख) नित्यवादः । | (ख) क्षणभङ्गवादः । |
| (ग) श्रुतिप्रामाण्यम् । | (ग) श्रुतेरप्रामाण्यम् । |
| (घ) जन्मना कर्मणा च श्रेष्ठत्वम् । | (घ) कर्मणा श्रेष्ठत्वम् । इति । |

●

१. महायानप्रस्तावनायाम् ( शान्तिभिक्षोः ) ।

# परलोकास्तित्वभावनायाः क उपयोगः ?

**डॉ० आदित्यनाथभट्टाचार्यः**

उपाचार्यः, संस्कृतविभागस्य

वर्धमानविश्वविद्यालये

पश्चिमवङ्गः

❀❀❀

अस्ति परलोको न वा ? मरणानन्तरमात्मा विद्यते न वा ? इह जन्मन्यनुष्ठितानां कर्मणां भोगः सम्पद्यते, उत तदुपपत्तये जन्मान्तरमपि वा ग्रहणीयम् ? इत्येवमाद्या विचिकित्सावली समुल्लसति निरन्तरं मनःसु मानवानां मननशीलानामास्तिकानां नास्तिकानाञ्च, विशेषत आधुनिकवैज्ञानिकसुखसम्पद्भूयिष्ठे तच्चाकचिक्यमोहाच्छन्ने जगति आधुनिकसमुन्नतविज्ञानोज्ज्वलशिक्षादीक्षितानां जनानाम् । अत्र नैतच्चित्रं यद् विज्ञानोन्नीताभ्युदयगिरिशिखरम् आरुरुक्षूणां मानुषाणां मनःसु जाग्रत्यहर्निशमेव एतादृशाः संशयाः, अपि तु स्वाभाविक्येव परलोकविषयिणी विजिज्ञासा विदुषां तत्त्वबुभुत्सूनाम् । न हीदानीमेव, अनादिकालत एव एतादृशो विचिकित्सा प्रचलन्ती आस्ते । श्रुतिरपि हि मातेव हितकारिणी विचिकित्सामिमां समुपदिशन्ती वर्त्तते । आम्नातञ्च कठोपनिषदि—

**'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।**
**एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः'** ॥ ( १।१।२० )

सेयं विचिकित्सा समुपस्थापितैव नचिकेतसा यमसमक्षम् । यमेन च तदुत्तरमुखेन समुपदिष्टमात्मतत्त्वं नचिकेतसे । अनाद्यविद्यैव खल्वेतादृश्या विचिकित्साया मूलकारणम् । न ह्यविद्यामूले रागद्वेषमोहैरभिभूतः पुरुषो निरतिशयसच्चिदानन्दं निर्गुणं निर्विकारम् एकमद्वितीयमात्मतत्त्वं प्रभवति कथञ्चित् समवगन्तुम् । अत एव सहजत एवात्मतत्त्वविषयिणी परलोकविषयिणी च प्रतिपित्सा समुदेति चेतःस्वास्तिकानामपि, किमुत नास्तिकानाम् अर्वाचीनानाञ्च ।

या चात्मनः परलोकविषयिणी विचिकित्सा साऽप्यात्मनो नित्यत्वविचिकित्सामूलिकैव । न हि आत्मनो नित्यत्वे निश्चिते आत्मनो जन्मान्तरमस्ति न वेति कश्चित् सन्दिग्धे, नित्यात्मनः स्वकर्मफलभोगाय जन्मान्तरग्रहणस्यावश्यकत्वात् । तदुक्तं भगवता—

**'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥'**
( गीता–२।२२ )

नापि पुनरात्मनोऽनित्यत्वपक्षे जन्मान्तरवादः समुपपद्यते, अनित्यस्यात्मनः क्षणेनैव वा समं वा देहेन नाशस्य अवश्यम्भावित्वात्, कुतस्तस्य जन्मान्तरप्रत्याशा ? यत्तु एकस्यापि नित्यस्यात्मन एकमेव जन्म न तु जन्मान्तरम्, एवञ्च क्रमेण गृहीत-जन्मनां सर्वेषामात्मनां जन्मकूटनाशे तैः कृतानां पुण्यपापानां विचारं परमेश्वर एव करिष्यति । विचारेण निर्णीतानां पापभाजां नरके नित्यवासः, पुण्यवताञ्च स्वर्गे नित्यवासो भविष्यति, कृतमात्मनो जन्मान्तरकल्पनया इति, तदपेशलम्, वैचित्र्या-नुपपत्तेः । सर्वेषामेवात्मनां यद्येकमेव जन्म, नाधिकं तर्हि सर्व एव सुखिनो भवेयुः, न कश्चिद् दुःखभाग् भवेत् । सर्व एव वा दुःखिनो जायेरन्, न भवेत् कश्चित् सुखी । सर्व एव च नीरोगाः सरोगा वा स्युः, सकला विकला वा, धनिनो निर्धना वा । न तु तद् दृश्यते लोके । अतः सुखदुःखादिवैचित्र्योपपत्तये कर्मणामेव वैचित्र्यमभ्युपेयम् । न च सर्वतन्त्रस्वतन्त्रस्य परमेश्वरस्य अप्रतिहतया स्वतन्त्रेच्छयैव वैचित्र्यमुपपद्यताम् । किं तदर्थं कल्प्यते कर्मणामपि वैचित्र्यमिति वाच्यम् । तथा सति सर्वैः परमेश्वर-वादिभिः स्वीकृतं परमेश्वरस्य परमकारुणिकत्वं सर्वजीवसमदर्शित्वं च दत्तजलाञ्जलि प्रसज्येत । न हि कांश्चिद् दुःखिनः कांश्चिच्च सुखिनः, कांश्चिद् रोगिणः कांश्चिच्च नीरोगान्, कांश्चिद् विकलान् कांश्चिच्च सकलान्, कांश्चिद् धनिनः कांश्चिद्वा निर्धनान् कुर्वन् परमेश्वरो दयालुर्वा समदर्शी वा शक्येत केनापि कल्पयितुम् । अतः कर्मवैचित्र्यादेव हि जीवानां सुखदुःखादिवैचित्र्योपपत्तिरिति शास्त्रकृतां राद्धान्तः । तद् दर्शितं ब्रह्मसूत्रकारेण—

**'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति'** । ( २।१।३४ )

नन्वकस्मादेव भवतु सर्वमेतद् वैचित्र्यम्, किं तत्र कारणत्वगवेषणया इति चेत्, मैवम्, कादाचित्कत्वानुपपत्तेः । सर्वमेव हि दृश्यमानं वस्तु कादाचित्कम् उपलभ्यते । कादाचित्कत्वञ्च पूर्वमसत्त्वे सति कस्मिंश्चिदुत्तरकाले सत्त्वम् । य एते घटादयोऽस्माभिरुत्पद्यमाना उपलभ्यन्ते, ते सर्वे एवोत्पत्तेः पूर्वं नासन्, परञ्च सन्तो दृश्यन्ते । तदेतत् कादाचित्कत्वं निरपेक्षस्य निष्कारणस्य भवितुं नार्हति । अन्यथा वस्तूनां सदातनत्वमेव स्यात्, अत्यन्तमसत्त्वं वा । तथा हि, यदेतदुक्तम् अकस्मादेव स्यादिति तदेतद् विचारणीयम् । किम् अकस्मादित्यनेन किञ्चित् कारणम् अनपेक्ष्यापि उत्पद्यते वस्तुजातम् इत्याकूतं भवताम् ? यद्येवं सदातनमेव सर्वं स्यात्, यत् किल कारणाभावादपि जायते, तदिदानीमिव पूर्वमपि जायताम्, तत्र किं बाधकम् ? न हि

किञ्चित् तादृशं सदातनं दृश्यते। अतो निरपेक्षं जायत इति उक्तिर्या दुरुक्तिरेव सा। यदि किल अकस्मादेव भवतीत्यस्य कस्मादपि कारणाद् न भवत्येव कार्यमित्येवार्थोऽभिप्रेयेत भवद्भिः, तर्हि किमपि वस्तु कदाचिदपि न जातं जायते जनिष्यत इत्येव पक्षः कक्षीकृतः स्याद् निरपेक्षत्वपक्षपातिना भवतेत्यायातम्। कस्मादपि कारणाद् यन्न भवति तत् कदाचिदपि भवति भविष्यति वेति का प्रत्याशा ? न हि सर्वमेव जगद् अवर्त्तमानं शून्यं वा समुपलभ्यते, येन तत्पक्षः कक्षीकर्त्तुमलमस्माभिरपि। यदि च अकस्मादेव भवतीत्यस्य न स्वस्माद् अन्यस्माद् भवति, अपि तु स्वस्मादेवेत्येवार्थः समाविष्क्रियेत भवद्भिरायुष्मद्भिः, तर्हि अलीकत्वमेव जगतः पर्यवस्येत। न हि किञ्चित् कार्यमपि स्याद् उत्पद्यमानमपि दृश्येत। न तु अन्यस्मात् क्रियते उत्पद्यते वा इति दृश्यते। तथा सति स्वमेव कार्यं स्वस्यैव कारणं स्यादित्यापद्येत। तत्तु न सङ्गच्छते, कार्यकारणयोः पूर्वापरकालीनत्वनियमात्। न हि यत् कार्यादव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणे न वर्त्तेत, तत्तस्य कारणं भवेदिति प्रेक्षावद्भिरुत्प्रेक्षितं दृश्यते। नापि एतत्क्षणोत्पन्नं कार्यं स्वाव्यवहितपूर्वक्षणेऽपि आसीदिति वक्तुं शक्यते। तथा सति तस्य एतत्क्षणोत्पन्नत्वमेव व्याहन्येत। अतः कार्यकारणयोः पूर्वापरीभावोपपत्तये कार्यात् कारणस्य भेदोऽवश्यमङ्गीकरणीयः। दृश्यते च सर्वत्रैव प्रसिद्धकार्यकारणभावयोस्तन्तुपटयोर्दण्डघटयोर्वा भेद एव, न तु अभेदः। अतः स्वमेव कार्यं स्वस्य कारणं भवेदिति यदुक्तं तत् कार्यस्यालीककारणत्व एव पर्यवस्यति। तदेतत् कार्यस्यापि अलीकत्वं व्यवस्थापयतीति सैषा कल्पना भवेन्मूर्खाणामेव, न तु विद्वज्जनानाम्।

यद्युच्येत, न वयं निरपेक्षत्वं वा अनुत्पन्नत्वं वा अलीकत्वं वा कार्यस्योत्प्रेक्षामहे ; अपि तु स्वभाव एव तादृशः सर्वेषां वस्तूनां यदेतानि नियतदेशकालानि एवोपलभ्यन्ते न त्वनियतदेशकालानीति। स्वभावस्यायं महिमा येन तेषां नियतदेशकालत्वमुपलभ्यते। तत्रेदमभिधीयते—कोऽयं स्वभावो नाम यस्य महिम्ना कार्यस्य नियतदेशकालत्वं स्यात्। अथोच्येत नियतदेशकालत्वमेव कार्यस्य स्वभाव इति, न तु स्वभावमहिम्ना तस्य तत्त्वमिति चेत्, तर्हि भवान् पृष्टो व्याचष्टाम्, किमिदं नियतदेशकालत्वं यत् कार्यस्य स्वभावत्वेनोपवर्ण्यते। यदि किल कस्मिंश्चित् काले कस्मिंश्चिद्देशे च नियमेन वर्त्तमानत्वं तत् तर्हि नियमस्यापि अर्थः पृष्टो व्याचष्टव्यः। यदि च तत्कालात् पूर्वमसत्त्वे सति तत्कालवृत्तित्वं नियतकालत्वम्, तद्देशादन्यत्र अवर्त्तमानत्वे सति तद्देशवृत्तित्वं नियतदेशत्वम् इत्युच्यते तर्हि जन्यानां कार्याणां कादाचित्कत्वमेव स्वभाव इत्येवोक्तं भवति। न हि कादाचित्कत्वं नाम पूर्वमसत्त्वे सति तत्कालसत्त्वादन्यद् भवितुमर्हति। तदेव कादाचित्कत्वं चेद् भवताऽपि कार्यस्य स्वभावत्वेनाङ्गीक्रियते, तर्हि सुमहतो दोषा-

न्नास्ति निस्तारः। न हि निरपेक्षस्यानियतावधिकस्य वा कादाचित्कत्वं स्वभावो दृश्यते। न हि आकाश आत्मा वा कादाचित्क इति केनापि अनुभूयते। तदेतत् स्वभावत्वेनोपवर्णितमपि कादाचित्कत्वं निरपेक्षस्य न भवितुमर्हति। दृश्यते च कादाचित्कत्वस्वभावानां सर्वेषामेव घटादीनां सापेक्षत्वं नियतावधिकत्वं वा। यद्धि जन्यं घटादिभाववस्तु तस्य पूर्वावधिः, उत्तरावधिश्चेत्यवधिद्वयं दृश्यते। यत्तु जन्यमपि अविनाशि यथा ध्वंसः, तस्य पूर्वावधिरेव दृश्यते। यत्तु अजन्यं विनाशि यथा प्रागभावः, तस्य उत्तरावधिरेव दृश्यते। तदेतत् सदातनभिन्नं सर्वमेव सावधिकमिति प्रत्यक्षसिद्धम्। तत् कथं स्वभावोऽपि कादाचित्कत्वं वस्तुनो निरवधित्वम् उपपादयेत् ? न हि दृष्टे अनुपपन्नं नाम। अतः सर्वत्र सावधिकत्वे अङ्गीकृते कार्यस्य सकारणत्वमेवाङ्गीकृतं भवति।

तदेतत् कार्यकारणभावसाधकं युक्तिजालं स्वयमेवावेदितम्, सविस्तरं विचारितञ्चोदयनाचार्येण। तदुक्तम्—

**'हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।**
**स्वभाववर्णना नैव अवधेर्नियतत्वतः'** ॥ ( कुसुमाञ्जलिः )

अकस्मादेव भवतीत्यस्य पञ्चविधमर्थं सम्भाव्य तमेव निराकर्तुं कारिकाऽसौ विरचिता। तथा हि, 'अकस्मादेव भवति' इत्यस्य न कस्मादपि कार्यं भवतीति यदि अर्थः स्यात् तर्हि कार्यस्य कारणमेव निषिध्यते, यदि किल कस्मादपि न भवत्येवेत्येव तदर्थः, तर्हि कार्यस्योत्पत्तिरेव निषिध्यत इति स्पष्टमवगम्यते।

तदेतयोरुभयोरपि अर्थयोर्निराकरणाय उक्तम्—'हेतुभूतिनिषेधो न' इति। यदि किल न कार्यादन्यस्माद् भवतीति तदर्थः, अथवा अकस्माद् अकिञ्चित्करात् तुच्छादेव भवति कार्यमित्येवार्थो विवक्ष्यते, तदा तयोर्निराकरणाय उक्तम्—'सानुपाख्यविधिर्न च' इति। यदि च अकस्मात् किञ्चिदप्यनपेक्ष्य स्वभावादेव भवतीत्येवार्थोऽभिप्रेयते तदा तस्य निराकरणाय उक्तम्—'स्वभाववर्णना नैवे'ति। तत्र युक्तिश्च प्रदर्शिता—'अवधेर्नियतत्वतः' इति।

तदेवं कार्यमात्रस्याकस्मिकत्वं निराकरिष्णुना कुसुमाञ्जलिकृता कार्यस्य सापेक्षत्वं सकारणत्वं वा व्यवस्थापितम्। एतावता इदमवधारितं भवति, कार्यमात्रस्य किमपि कारणमवश्यमङ्गीकरणीयम्। अन्यथा प्रत्यक्षदृष्टं कार्यस्य कादाचित्कत्वेव व्याहन्येत। तथा सति यदेतद् जगद्वैचित्र्यमस्माभिरुपलभ्यते, तस्यापि अवश्यं केनापि कारणेन भाव्यम्। तदेवादृष्टं प्रत्यक्षायोग्यमपि स्थितिशीलमात्मनि वर्त्तमानं परलोकसम्पादितकर्मसम्भावितं किञ्चिदवश्यमङ्गीकरणीयम्, तदाश्रयतया

आत्मनः स्थायित्वं नित्यत्वं वा, तत्फलभोगार्थञ्च जन्मान्तरग्रहणादिकं सर्वं खल्वेक-प्रघट्टकेनैव समुपपद्यते। सम्भाव्यते च तदधिष्ठातृतया परमेश्वरस्यापि सद्भाव इति।

ननु यदिदं कादाचित्कत्वान्यथानुपपत्त्या कार्यस्य नियतावधिकत्वं व्यवस्थाप्यते, तदपि न घटते, अनवस्थादोषकवलितत्वात्। तथा हि घटादिकार्यस्य यत् कपालादिकारणं दृश्यते तस्यापि कादाचित्कत्वेन सावधिकत्वात् किञ्चिदन्यत् कारणं कल्पनीयम्। कल्पितस्यापि कारणस्य सावधिकत्वेन तस्यापि अन्यदिति अनवस्था अवतिष्ठते।

किञ्च यस्य किल जगद्वैचित्र्यस्यान्यथानुपपत्त्या भवता अदृष्टादिकं कारणं कल्प्यते, तस्यापि अदृष्टस्य केनचित् कारणेनावश्यं भाव्यम्, कादाचित्कत्वात्। तत्कारणं चेत् शुभाशुभं कर्म तदा तदुपपत्तये तत्कारणं देहादिकं कल्पनीयम्। तस्यापि तु कारणं यद्यदृष्टं तर्हि घटीयन्त्रवद् अनिशमावर्त्तमानं कर्मादृष्टदेहादिचक्रम-वश्यमभ्युपेयम्। तथा च सैवानवस्था वज्रलेपायेत इति चेत्, सत्यमेतदुक्तम्। तथापि नैषा अनवस्था दोषाय, बीजाङ्कुरवत्। तथा हि—बीजं विना नाङ्कुरः, नाङ्कुरं विना वृक्षादिकम्, वृक्षादिकं विना न फलम्, फलं विना च न बीजम् इति दृष्टमपि बीजाङ्कुरचक्रम्, तत्र दृष्टाऽपि अनवस्था दोषाय न कल्पते, अनादित्वात्। तदुक्तं कुसुमाञ्जलिकृता—

**'प्रमावो नादिमानेषः'** इति।

नन्वस्तु दृष्टत्वात् कार्याणां वैचित्र्यम्। तेन कारणानामपि वैचित्र्येण भाव्य-मिति का प्रत्याशा? न हि कार्याणां वैचित्र्यं कारणवैचित्र्यनियम्यमेवेति शक्यं समाविष्कर्त्तुम्, एकस्मादपि कारणाद् नानाविचित्रकार्योत्पत्तिदर्शनात्। यथैक एव प्रदीपस्तिमिरापहारी, वर्त्तिविकारकारी, प्राकाराभ्यन्तरप्रकाशकारी च तथा एकैव पृथिवी घटपटादिनानाविचित्रकार्याण्यारभमाणा परिदृश्यते। तस्माद् एकमेव प्रकृत्याख्यं कारणम् अनेकविचित्रकार्याण्यारभताम्। कृतमदृष्टाख्यकारणस्य वैचित्र्यवैजात्यादिकल्पनया।

किञ्च सम्भवति दृष्टफलत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वाद् दृष्टमेव प्रकृतिनामधेयम् अनेकानेकविजातीयकार्याण्यारभताम्, तथा चावश्यकल्पनीये तादृशे कारणे अलम् अदृष्टादिवैचित्र्यकल्पनया।

न च दृष्टश्चेतनाचेतनत्वेनोभयविधः पदार्थः। दृष्टञ्चोभयोरेवैकस्मिन् घटादिकार्ये समपेक्षितत्वम्, चेतनश्च कर्त्ता, अचेतनञ्च समवायि निमित्तमुपादानं वा कारणम् इत्यन्ततो गत्वा विजातीयं द्विविधं कारणं त्ववश्यमङ्गीकरणीयम्। तत्

कथमुच्यते, एकमेव कारणं विचित्रानेककार्यकारीति वाच्यम्, चेतनस्य अचेतनादपृथक्त्वात् ।

न हि चेतनत्वं नाम कश्चिदेवंभूतविजातीयो धर्मो यः किलाचेतने नैव वर्त्तेत । तर्कपरिशीलितमतीनामपि मते चैतन्यं गुणविशेष एव न किञ्चिद्विजातीयं द्रव्यम् । स च गुणोऽचेतनेऽपि क्वचित् कदाचिन्नोत्पत्स्यत इति का प्रत्याशा ? दृश्यते हि विजातीयानां द्रव्याणां रसायनविद्यानिपुणैः सम्मिलननैपुण्येन विजातीयगुणोत्पत्तिः । तथा च—

स्वभावतोऽमादकानां मधुगुडतण्डुलादीनामपि प्रक्रियाविशेषेण मादकत्वम्, तदेवंभूतानां सम्मेलनेनोत्पद्यताम् अचेतनस्य चैतन्यमिति किमाश्चर्यम् ? तस्माद् गतमनेकानेकविजातीयकारणतागवेषणेन, इति चेत्, मैवम्, क्रमिकनानाकार्याणामुत्पत्तेरेवानुपपत्तेः । न ह्येकस्मादेव कारणात् समुत्पद्येरन् कार्याण्यनेकानि एकजातीयानि । भवेयुश्च तानि क्रमेणोत्पद्यमानानीति युक्तमुत्प्रेक्षामहे ।

यत् किलैकस्मादेव कारणाज्जायते उत्तरोत्तरक्षणे, तत् प्रथमक्षणे वा कथं वा नोत्पद्यते ? न घटपटादीनि सर्वाण्येव कार्याणि एकस्मिन्नेव काले समुत्पद्यमानानि लक्ष्यन्ते । तदेतेषाम् अयौगपद्यं क्रमो वा भवतामप्यभिमतं कथञ्चिदुपादानीयमेव । अन्यथा दृष्टविरोधः स्यात् । न हि एकमेव कारणं घटादिकार्यं जनयतीति दृष्टम् । दृश्यते च मृद्दण्डचीवरकपालकुलालसलिलादीनि सम्मिल्येव घटादिकार्यं जनयन्तीति ।

एवं यत्र किल एकस्मिन्नेव क्षणे समुत्पद्यमानम् एकमेव घटादिकार्यं समपेक्षन्ते नानाकारणानि, तत्र क्रमेणोत्पद्यमानानि कार्याण्यनेकान्यपि एकस्मादेव कारणात् समुत्पत्स्यन्त इति कथमाशास्यते ? क्रमार्थं कस्यचिद् अवश्यमपेक्षणीयत्वात् । तदुक्तं न्यायकुसुमाञ्जलिकृता—'एकस्य न क्रमः क्वापि' । क्वापि कुत्रापि एकस्य एकमात्रव्यक्तिकस्य कारणस्य नियम्यो न कार्याणां क्रमो भवितुमर्हतीति तदर्थः ।

यत्र परमास्तिकैर्वेदैकशरणैरेकाद्वितीयब्रह्मवादिभिरपि नाङ्गीकृत एककारणतावादो व्यावहारिककार्यजनने, यत्र च प्रकृतिनैरपेक्ष्यपक्षैः सांख्ययोगिभिरपि एककारणत्ववादो नैव स्वीकर्त्तुं शक्यते, तत्र किमु कथा दृष्टमात्रदृष्टीनाम् अलौकिकादृष्टतत्त्वनिराकर्तॄणां नास्तिकानां पक्ष एककारणत्वकल्पनायाः ।

ननु मास्तु क्रमिककार्याणामुत्पत्तिरेकस्मादेव कारणात्, तथापि समानजातीयात्तु कारणाद् मृदादेर्नानाक्रमिकघटपटादीनामुत्पत्तिरस्तु, कानुपपत्तिः ? दृश्यते च एकेन एकजातीयेन कुम्भकारेण एकेन एकजातीयेन वा मृत्पिण्डादिना समुत्पद्यन्ते

क्रमेणापि घटादयः। तस्मादेकजातीयादेव कारणाद् विजातीयान्यपि समुत्पद्यन्तां क्रमिककार्याणि। इति चेन्मैवम्। तत्रापि सजातीयकारणादेव सजातीयकार्यस्योत्पत्तेः, न हि समानजातीयादपि कुम्भकाराद् घटादिविजातीयं पटादिकार्यमुत्पद्यत इति दृश्यते। कार्योपादानयोः साजात्यात् सजातीयस्य कार्यस्योत्पत्तावपि न कुत्रापि विजातीयं कार्यमुत्पद्यमानं दृश्यते।

तस्मात् कार्यस्य वैचित्र्यं वैजात्यं वा न समानजातीयकारणनियम्यम्। कुत्रचित् कथञ्चिद् उत्पद्यमाने विजातीयेऽपि कार्ये कस्यचित् कारणस्य अनुवर्त्तमानत्वेऽपि न कारणसामग्रीघटकानां सर्वेषां कारणानामनुवर्त्तमानता दृश्यते।

पाकालोकदाहादिषु विजातीयेष्वपि कार्येषु कारणत्वेनानुवर्त्तमानेऽपि तेजस्येकजातीये, न तु तत्र सामग्री एका एकजातीया वा दृश्यते। तस्माद् न कार्यस्य वैचित्र्यम् एकजातीयेन कारणेन नियन्तुं शक्यते, अपि तु कारणवैचित्र्येणैव। तदेतदेवोक्तम्—

'वैचित्र्यञ्च समस्य न'।

ननु एकमेकजातीयं वा कारणं यदि नानाशक्तिविशिष्टं स्यात्, शक्तीनां प्रत्येकं चेद् नानाविजातीयकार्यजनकं भवेत्, तर्हि तेनैव एकेन एकजातीयेन वा कारणेन अनेकानेकजातीयकार्योत्पत्तिरस्तु। कृतं कारणसामग्रीवैचित्र्यस्य कारणवैचित्र्यसम्पादकत्वकल्पनया इति चेदत्रोच्यते—नानाशक्तीनामेकस्मिन् एकजातीये वा कारणे समवेतत्वासम्भवात्। न हि कार्यकारणयोरभेदवादिनां मते शक्तयः कारणाद् भिन्ना भवितुमर्हन्ति। अभेदे च एकस्मादेकजातीयाद्वा कारणात् कार्यवैचित्र्योत्पत्तिकल्पना पूर्ववदेवानुपपन्ना। भेदे च शक्तीनां कारणादतिरिक्ता एव शक्तयः कारणान्तररूपाः कार्यवैजात्यं सम्पादयन्तीति समायातम्।

भिन्नानां शक्तीनां सहकारित्वेऽपि कारणसामग्रीघटकतया कारणसामग्रीवैचित्र्यं तद्वैजात्यं वा सम्पादयन्त्यः शक्तयः सामग्रीवैचित्र्यस्य तद्वैजात्यस्य वा कार्यवैजात्यनियामकत्वं व्यवस्थापयन्तीति सिद्धं नः समीहितम्।

तस्माद् नानाशक्तिविशिष्टादेकस्मादेकजातीयाद्वा कारणात् कार्यवैजात्यस्याङ्गीकारेऽपि नैव सिद्धयति भवदभिप्रायः। किञ्च एकस्य एकजातीयस्य वा कारणस्यानेकानेकजातीयकार्यानुकूलशक्तिमत्त्वमपि नोपपद्यते। शक्तयश्चेत् कारणादभिन्नाः कथं तर्हि नानाशक्तयः कारणभेदमनापद्यैव परस्परभिन्ना भवेयुः? न हि एकस्मादत्यन्ताभिन्ना शक्तिर्नाना भवितुमर्हति, नापि स्वरूपतो भिन्ना नानाशक्तय एकस्मात् कारणादत्यन्ताभिन्ना भवितुमर्हन्ति।

एवं भेदाभेदवादेऽपि न निस्तारः, भेदाभेदयोरेकत्रासम्भवात्। एकत्रोभयोः स्वीकारे च नोभयोस्तात्त्विकत्वं स्यात्। एकस्य तात्त्विकत्वे अपरस्य मिथ्यात्वेनावश्यं भाव्यम्। यदि किल भेदस्तात्त्विकः स्यात्, तर्हि भिन्नाभ्य एव शक्तिभ्यः कार्यवैजात्यं न त्वेकस्मादेकजातीयाद्वा कारणात्। स्वरूपतो नानाशक्तीनां कारणादत्यन्ताभेदस्तु नैव तात्त्विको भवेत्, दृष्टविरोधात्।

न च एकस्या एव एकजातीयाया एव वा मृत्तिकाया घटशरावोदञ्चनादीनि नानाविजातीयकार्याणि दृश्यन्ते समुत्पद्यमानानि, तत् कथमुच्यते दृष्टविरोधादिति वाच्यम्, तत्रापि भेदस्य प्रत्यक्षत्वात्।

न हि यः खलु मृत्पिण्डो घटमुत्पादयति, स एव शरावमुदञ्चनञ्चोत्पादयतीति दृष्टम्। दृश्यते तु नानैव मृत्पिण्डा नानैव घटादिकार्याणि समुत्पादयन्तीति। न हि सर्व एव मृत्पिण्डा मृदोंऽशविशेषा एव। तथा चाभिन्ना एव ते मृत्तिकाया इति वाच्यम्, अंशांशिनोर्भेदाभेदयोर्विकल्पासहत्वात्। तस्मादनायत्त्या शक्तीनां कारणाद् भेद एवाङ्गीकरणीयः।

तथा सति एकस्मादेकजातीयाद्वा कारणाद् भवति कार्यवैजात्यमिति रिक्तं वचः। अपि च, एकस्मिन् एकजातीये वा कारणे समवयन्ति नानाशक्तय इति कथमवगतम्? न हि शक्तयः प्रत्यक्षयोग्याः, येन प्रत्यक्षेणैव तदवगमः सम्भवेत्; अपि तु सर्वेषां दार्शनिकानां मते स्वीक्रियमाणा अपि शक्तयो नित्यानुमेया एव। तदनुमानन्तु कार्यदर्शनेनैव। तथा च—

अनेकानेकजातीयकार्योत्पत्तिदर्शनेन नानाविजातीयशक्तयः कल्पनीयाः। तथा सति ता एव शक्तयः कार्यवैजात्यं तद्वैचित्र्यं वा सम्पादयन्तीत्येव भवति सिद्धम्। न तु एकमेकजातीयं वा कारणं नानाकार्यनियामकमिति सुधीभिरेव विभावनीयम्। तार्किकैस्तु कार्यानुकूला कापि शक्तिरेव नाङ्गीक्रियते। कुतस्तद्भेदेन कार्यवैजात्यं तैरङ्गीकर्त्तुं शक्यते?

ये तु स्वीकुर्वन्ति नानाशक्तीः कारणेषु तेषां मतं तु पूर्ववद् निराकृतं वेदितव्यम्। तस्मात् शक्तिभेदात् कार्यवैजात्यमिति यदुक्तं तद् दुरुक्तमेव। तदुक्तम्—'शक्तिभेदो न चाभिन्नः'। केचित्तु एकस्मादेव कारणाद् ब्रह्मणोऽनेकशक्तिमतो विचित्रं जगद्रूपं कार्यमुत्पद्यत इत्यद्वैतिमतेन पूर्वपक्षमुपस्थाप्य शक्तिभेदो न चाभिन्न इत्यनेन तन्निराकृतमिति व्याचक्षते। अपरे तु पुनर्नैतन्मतं युक्तमिति वदन्ति।

अयमाशयः — न ह्ययं पूर्वपक्षो वेदान्तिमतेन भवितुमर्हति। न हि वेदान्तिका जगद्वैचित्र्यकारणमदृष्टादिकं नाङ्गीकुर्वन्तीति प्रसिद्धम्; अपि तु 'वैषम्यनैर्घृण्ये इति

चेन्न सापेक्षत्वात् तथा हि दर्शयति' इति वेदान्तसूत्रव्याख्यायां भाष्यकारेण भगवता शङ्कराचार्येण एतदेवोपपादितं यत् परमेश्वरस्य वैषम्यनैर्घृण्ये दोषौ चेन्निराकर्त्तव्यौ तर्हि जगद्वैचित्र्यकारणं जीवादृष्टं वैचित्र्यमवश्यं परमेश्वरेणापेक्षणीयम्। तस्माद् वैदान्तिकैरपि जगद्वैचित्र्यकारणत्वेन नानाविधादृष्टस्य स्वीकरणाद् न तन्मते पूर्वपक्षो युज्यते।

यद्यपि अद्वैतमते जगतस्तद्वैचित्र्यस्य वा न तात्त्विकत्वम्, अतस्तत्कारणत्वेनादृष्टस्वीकारोऽपि न तात्त्विकस्तस्माद्वैचित्र्यादृष्टयोस्तात्त्विककार्यकारणभाव एव निराक्रियत इति वक्तुं शक्यते, तथापि तात्त्विकत्वानङ्गीकारेऽपि तैर्वैचित्र्यादृष्टयोर्व्यावहारिककार्यकारणभावस्याङ्गीकाराद् न तन्मते प्रतिक्षेपो युज्यते। तत्त्वतस्तु तेषां मते ब्रह्मातिरिक्तं किमपि नास्ति। अतो जगद्वैचित्र्योपपत्तये अनेकशक्तिमतो ब्रह्मणः कारणत्वमपि न तत्त्वतोऽङ्गीकर्त्तुं शक्यते। अतस्तन्मते उक्तपूर्वपक्ष एव न युज्यते। तस्मात् तन्निराकरणमपि न युक्तमिव प्रतिभाति।

अत एव नास्तिकमतेन सांख्यमतेन वा पूर्वपक्षः। तन्निराकर्त्तुमेवोक्तम्—'शक्तिभेदो न चाभिन्न' इति।

नन्वेकस्यापि कारणस्य स्वभाव एव तादृशो यः कार्यस्य वैचित्र्यं वैजात्यं वा सम्पादयतीत्युक्ते किमनुपपन्नमिति चेत्, मैवम्, स्वभावस्य दुर्निरूपणीयत्वात्। तथा हि कोऽयं स्वभावो नाम? यो हि अनपेक्ष्यापि कारणानेकत्वम्, अनादृत्यापि कारणवैजात्यं सम्पादयति कार्यवैजात्यम्। न हि स्वभावशब्दोच्चारणमात्रेणैव कश्चिद् अकाण्डताण्डवकारी सकललोकचमत्कारी पदार्थः समाविर्भवति, योऽलं कार्यवैजात्याय।

किञ्च कल्प्यमानोऽपि कारणे स्वभावः पूर्वत एवानुवर्त्तते प्रागेव वा कार्यवैजात्यात् समुत्पद्यते। एकजातीयकार्योत्पत्त्यनन्तरं कार्यान्तरजननकालेऽपि किमनुवर्त्तते स स्वभावः? इत्यादिविकल्पजालकवलीकृतोऽयं स्वभावः कथमुत्सहिष्यते कार्यविजातीयतां समुत्पादयितुम्। यदि हि कारणस्योत्पत्तेः प्रागपि स्वभावो वर्त्तेत, तर्हि स तस्य कारणस्यैव स्वभावः, नान्यस्येति कथं निर्णेतुं शक्यते? स च स्वभावो नित्यश्चेत् तर्हि अनित्ये कारणे कथं समवेयात्? समवेतोऽपि स कथं न जातिर्भवेत्? जातित्वे तु तस्य कारणस्य वैजात्यमेव कथं नापद्येत।

अपि च नित्योऽपि च स्वभावः कार्यान्तरजननकालेऽप्यनुवर्त्तमानः कथं न घटं पटीकुर्यात्, न वा पटं घटीकुर्यात्? यदि कार्यान्तरजननात् पूर्वमेव समुत्पद्यमानः स्वभावस्तस्य वैचित्र्यं सम्पादयेत्, तर्हि तस्य स्वभावस्यापि केनचित् कारणेन भाव्यम्। तस्यापि कारणस्य भाव्यं केनचिदन्येन कारणेन। इत्यनवस्थादोषदूषितेयं कल्पना नालं विवादिनां स्वाभिप्रायं साधयितुम्।

स्वभावभेदे च कल्पनीये कारणवैजात्यमेव समापतेत्। एवं घटस्वजातीयकार्यानुकूलस्वभावश्चेत् पटत्वजातीयकार्यजननकालेऽपि वर्त्तेत तर्हि आपद्येरन् पूर्वोक्ता एव दोषाः। एकस्यानेकस्वभावताकल्पनायान्तु दृष्टविरोध एव सम्पद्यते। स्वभाववादश्च व्याहन्यते, नानास्वभावकल्पनापेक्षया कारणवैजात्यकल्पनायामेव लाघवात्। तस्मादेष स्वभाववादः कथमपि नाधिरोहति युक्तिकक्षाम्। तदुक्तमाचार्येण—

**'स्वभावो दुरतिक्रमः'**।

तस्मान्निःसन्दिग्धमिदं यद् जीवानामिदं सुखदुःखादिवैचित्र्यं नियतं किञ्चित्कारणसापेक्षं स्यात्, तच्च परलोकगतकर्मवैचित्र्यजन्यनानाविधादृष्टकारणकमेव भवत्वित्येव हि मनीषिणां न्यायवैशेषिकमीमांसकवैदान्तिकप्रमुखाणां शास्त्रकृद्धुरन्धराणां परलोकसद्भावाभ्युपगन्तॄणां समुद्घोषः। तथा चोक्तम्—
**'कर्मेति सूक्ष्ममतयो वदन्ति'**। इति।



# काव्यार्थमीमांसा

श्रीवैरिष्टरतिवारी
सरस्वतीभवनम्,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

❀❀❀

**पृष्ठभूमिः —**

'पश्य देवस्य काव्यं न ममार न जीर्यति' इति निगमः सहृदयश्लाघ्यामनितरसाधारणीं वाणीमवद्योतयति। तच्च काव्यं न जीर्यति न वा म्रियते। आमूलचूलं रसपरिष्पन्दरमणीयं मुक्ताफलविच्छुरितच्छायाप्रतिमं सहृदयसंवेद्यमर्थं प्रतिपादयत् काव्यं तत्कर्मकुशलानां कवीनां यशःकायानां जरामरणजं भयमपसारयति क्षिणोति च शिवेतराणोति श्रीमद्वाग्देवतावताराः —

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे'[1] ॥

इति सन्दर्भेण काव्यप्रकाशे प्रतिपादयन्ति। तत्पूर्वकालीनाः श्रीमदभिनवगुप्तपादाचार्या अपि उपर्युक्तश्रुतिस्वारस्यैकमूलं कविसहृदयाख्यं तत्त्वं स्तुवन्ति—

'अपूर्वं यद् वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात् सारयति च।
क्रमात् प्रख्योपाख्याप्रसरसुभगं भासयति तत्
सरस्वत्यास्तत्त्वं कवि-सहृदयाख्यं विजयते'[2] ॥ इति।

काव्यं काव्यार्थश्चेति द्वावपि सहृदयश्लाघ्यौ। काव्यार्थस्य परमरमणीयत्वे नैव कस्यापि विप्रतिपत्तिः; परन्तु न स सर्वजनसंवेद्यो भवति, अत एवानन्दवर्धनाचार्येण—

---

१. का० प्र० १।२।

२. ध्वन्या० लोचने—मङ्गलाचरणम्।

'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्'[१]॥

इत्यभिहितम्। यदि वाच्यरूप एवासावर्थः स्यात्तदा वाच्यवाचकस्वरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। शब्दार्थशरीरं काव्यमिति, यदुक्तं तत्रापि—

"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः"[२]॥

इति नयेन महाकवेः शब्दार्थयोर्यत्नतः प्रत्यभिज्ञेयत्वमेव।

काव्यतत्त्वभूतार्थभावना नाम वाच्यातिरेकेणानवरतचर्वणा, तद्विषयीभूतोऽर्थ एव काव्यार्थः —

'तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते'[३]॥

इति नयेन सहृदयसंवेद्य एव न सर्वजनमतिविषयीभूत इति प्रतिपादितम्। तस्मात् शब्दार्थाद्व्यतिरिक्त एव काव्यार्थ इति स एवेह मीमांस्यते।

## काव्यार्थविश्लेषणम्

**श्रीकुन्तकाचार्यमतम्**—श्रीकुन्तकाचार्यरीत्या सहृदयहृदयाह्लादकारिस्वस्पन्दसुन्दरोऽर्थः काव्यार्थः। शब्दोऽपि तद्रीत्यैव 'अन्येषु शब्देषु सत्स्वपि विवक्षितार्थैकवाचकः शब्दः। श्रीकुन्तकाचार्यैः काव्यकाव्यार्थयोर्वाच्यवाचकभाव एव पक्षीकृतः, न ध्वन्यालोकप्रतिपादितव्यङ्ग्यव्यञ्जकभावस्तथापि काव्यगतो वाच्यवाचकभावोऽप्यपूर्व एव। क्रमेणोदाहरणं यथा, शब्दस्य—

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया **कपालिनः**।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी'[४]॥

अत्र सम्भवत्स्वपि वाचकसहस्रेषु कपालिपदं शिवस्य वीभत्सरूपताम्, दरिद्रताम्, 'सम्प्रति' 'द्वयं' पदेऽपि, पूर्वं चन्द्रकलैव शिवसमागमद्वारा निन्दनीयाऽभूत्, द्वितीया त्वमपीति 'प्रार्थना' त्वादृशायाः कुलीनायाः कृते नैव शोभनम्। एवमस्मिन् पद्ये कालिदासप्रयुक्ताः सर्वेऽपि शब्दा अपरिवर्त्तनीया एवेति काव्येषु शब्दकृतं वैशिष्ट्यम्। एवमेवार्थस्य यथा—

---

१. ध्वन्यालोके—१।७; २. तत्रैव—१।८।
३. ध्वन्यालोके—१ उद्द्योतः; ४. कु० सं० ५।७१।

'तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः'॥

अत्र मुनिः क इति विवरीतुं कविर्विविच्छित्त्यैव स वाल्मीकिरिति नाम्ना नोक्तवान्; किन्तु यथा तथोक्तमुपर्युक्तमिति, अथवा—

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशाद् हृदयनिहितादागतं त्वत्समीपम्।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि' ॥ (उ० मे० ३६)

अत्राविधवेति पदप्रयोगेणैव यक्षिण्याः सौभाग्यमवशिष्यत इति वक्तव्यम्, 'भर्तुर्मित्रम्' इत्यनेन विश्वासास्पदत्वमात्मनः प्रियमित्यनेनान्तरङ्गता, परदेशस्थानां हृदयेष्वपि मेघः स्वगृहगमनप्रेरणामाविर्भावयति, किं पुनः प्रियमित्रस्येति सर्वमप्यर्थमवद्योतयति। दैववशाद् विरहवैधुर्ययुक्तपरस्परानुरक्तचित्तस्यानुरागिणः सन्देशसमागमेन कृतार्थीकरणमेव मम व्रतमिति मेघदूतत्वमिति रमणीयमुपनिबद्धवान् महाकविः। सोऽयमर्थः सहृदयाह्लादकारी स्वस्पन्दसुन्दरश्च सञ्जातः। एवं कविविवक्षितार्थैकवाचकः शब्दः, सहृदयाह्लादकारी स्वस्पन्दसुन्दरश्चार्थः कुन्तकाचार्यरीत्या प्रदर्शितः।

श्रीकुन्तकाचार्य आनन्दवर्धनोत्तरभावी। वक्रोक्तिसिद्धान्तस्य प्रतिष्ठापकाचार्यस्य काव्यार्थविषयिणी दृष्टिः 'वक्रोक्तिजीवितम्' इति ग्रन्थे प्रतिपादिता। अनयोः शब्दार्थयोः शोभाशालितैव साहित्यमिति तत्त्वम्।

**ध्वनिकारमतम्**—श्रीमदानन्दवर्धनाचार्येणापि काव्यार्थस्य सहृदयहृदयाह्लादकारित्वमुक्तम्। तथा हि—

'अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ'[१]॥

अर्थात् काव्यार्थौ यः सहृदयश्लाघ्यस्तस्यैव वाच्यः, प्रतीयमानश्चेति द्वौ भेदौ। तद्रीत्या काव्यार्थो वाच्य एवेति न प्रत्युत लक्ष्यो व्यङ्ग्यश्च सम्भवति। तदुत्तरवर्तिना मम्मटाचार्येण काव्यप्रकाशे काव्यस्य लक्षणमुक्तम्—

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि[२]"।

'शब्दार्थौ काव्यम्' इति प्रतिज्ञाय शब्दस्य वाचकलक्षकव्यञ्जकभेदैस्त्रिविधत्वमुक्त्वा 'वाच्यादयस्तदर्थाः स्युः' इति ध्वनिकारमतमेव दृढीकृतम्। पण्डितराजेन

१. ध्वन्या० १।२; २. का० प्र० काव्यलक्षणम्।

जगन्नाथेन "रमणीयार्थप्रतिपादकः शब्दः काव्यम्[१]" इति सूत्रे वाच्य-लक्ष्य-व्यङ्ग्या-र्थानां सङ्ग्रहाय त्रितयसाधारणस्य 'प्रतिपादक'शब्दस्य निवेशः कृतः । वाच्यार्थकुक्षौ उपमादीनां परिगणनमस्ति । तदुक्तम्—

"तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः" ॥
"सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्"[२] ॥

एवं 'काव्यदर्शने' त्रिविधाः शब्दाः, त्रिविधाश्चार्था भवन्ति । वाच्य एव काव्यार्थ इत्यलङ्कारप्राधान्यवादिनयः । कुन्तकाचार्योऽप्याह–'वाक्यस्य वक्रभावोऽन्यो यः सहस्रधा भिद्यते । अनन्ता वाग्विकल्पाः । तेनालङ्काराणामानन्त्यमेव । भामहा-चार्यरीत्याऽपि 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः । इयं वक्रोक्तिरेव सर्वालङ्कारयोनिः । 'अतिशयोक्तिरेव वक्रोक्तिः' इति भामहः । तदुक्तम्—

"सैषा सर्वैव वक्रोक्तिः, अनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना' ॥ ( काव्यालङ्कारः )

कुन्तकाचार्यस्य वक्रोक्तिस्तु काव्यजीवितभूता, काव्यालङ्कारजननीति पृथगेवातिशयोक्तेरिति भेदः ।

काव्यमूलं सौन्दर्यमेव । सौन्दर्यमलङ्कारः । काव्यं ग्राह्यमलङ्कारात् । साल-ङ्कारस्य काव्यता । काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्त्तते । करण-व्युत्पत्त्याऽलङ्कारशब्दो यमकोपमादिष्वपि वर्त्तते । भावव्युत्पत्त्याऽलङ्कार्येष्वपि ।

वस्तुतस्तु काव्यमूलं सौन्दर्यमेवान्तःसौन्दर्यबहिःसौन्दर्यभेदाभ्यां विभज्यते । 'काव्यं ग्राह्यमलङ्कारात्', 'सौन्दर्यमलङ्कारः' इति वदन्तः शब्दार्थकलेवरविवेचन-मेव प्रपञ्चयन्ति ।

द्वितीये तु 'अन्तःसौन्दर्यस्यैव प्राधान्यं परिचिन्तयन्तस्तदाधारकमेव बाह्य-सौन्दर्यमिति व्यवस्थापयन्ति । ध्वनिदर्शने बहिःसौन्दर्यमेव वाच्यतया, अन्तः-सौन्दर्यमेव च प्रतीयमानतया स्वीक्रियते ।

**अभिनवगुप्तमतम्**—शब्दार्थस्वरूपं काव्यमिति यदुक्तं तत्र शरीरग्रहणादेव केन-चनात्मना भवितव्यम् । तत्र शब्दस्तु शरीरभाग एव सन्निविशते सर्वजनसंवेद्यत्वात् स्थूलकृशादिवत् । अर्थः पुनः सर्वजनसंवेद्यो न भवति । न ह्यर्थमात्रेण काव्यव्यपदेशः,

---

१. रसगंगाधरे काव्यलक्षणम्; २. ध्वन्या० १।६ ।

लौकिकवैदिकवाक्येषु तदभावात् । सहृदयश्लाघ्य एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्याऽभियुज्यते[1] ।

'तुल्येऽर्थरूपत्वे किमिति कस्मैचित्सहृदयः श्लाघते । तद् भवितव्यं केनचिद्विशेषेण । यो विशेषः स प्रतीयमानो भागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसङ्कलनाविमोहितहृदयैस्तु तत्पृथग्भावे विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावे । अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायापोद्धारदृशा तस्य सहृदयश्लाघ्यस्य काव्यार्थस्य द्वौ भेदावित्युक्तम्, न तु द्वावप्यात्मानौ काव्यस्य' ।

तेनेदमायातम्—काव्यार्थो रमणीयः[2] । तस्य त्रयोऽप्यर्था भवन्ति–वाच्यः, लक्ष्यः, व्यङ्ग्यश्च । शब्दोऽपि उपाधिभेदैर्वाचकः, लक्षकः, व्यञ्जकश्चेति त्रिविधः[3] । आनन्दवर्धनाचार्यरीत्या महाकवीनां वाणीषु वाच्यादन्यदेव प्रतीयमानं वस्त्वस्ति । यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलङ्कृतेभ्यः प्रतीतेभ्यो वाक्येभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु[4] ।

'यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । स एव काव्यार्थः । स चार्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्कारा रसादयश्चेति[5]..........' । सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वमेव ।

प्रतीयमानस्यार्थस्य द्वौ भेदौ—लौकिकः, काव्यव्यवहारगोचरश्च । यः शब्दवाच्यतां कदाचिदधिशेते स लौकिकः । स च विधिनिषेधाद्यनेकप्रकारो 'वस्तु'-शब्देनोच्यते । सोऽपि द्विविधः । यः पूर्वं क्वापि वाक्यालङ्कारभावमुपमादिरूपतयान्वभूत्, इदानीं त्वनलङ्काररूप एवान्यत्र गुणीभावाभावादपूर्वप्रत्यभिज्ञानबलादलङ्कारध्वनिरिति कथ्यते । ब्राह्मणश्रमणन्यायात् तद्रूपत्वाभावेन तूपलक्षितं वस्तुमात्रमुच्यते ।

यस्तु स्वप्नेऽपि न लौकिकव्यवहारपतितः ; किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुदितप्राङ्निविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदा-नन्दचर्वणाव्यापाररसनीयो रसः । स च काव्यव्यापारैकगोचरो रसध्वनिः । स एव काव्यार्थः काव्यात्मेत्युच्यते ।

---

१ ध्वन्या० लोचने— १ उद्द्योतः, पृ० १५; २. तत्रैव, पृ० १५ ।

३. रसगंगाधरे—१ आनने काव्यलक्षणम्; ४. काव्यप्रकाशे २ उल्लासः ।

५. ध्वन्या०—१ उद्द्योतः, पृ० १८ ।

एवं काव्यार्थो वाच्यः, लक्ष्यः, व्यङ्ग्यश्चेति संक्षेपः। व्यङ्ग्यार्थस्य कुन्तकाचार्यरीत्या उपचारवक्रतायाम्, महिमभट्टरीत्या काव्यानुमायां समाहारः। केचित्तु वाच्यवर्ग एव व्यङ्ग्यार्थस्यान्तर्भावं ब्रुवते; परन्तु व्यङ्ग्यार्थस्य न वाच्ये न वा लक्ष्येऽन्तर्भावः सम्भवदुक्तिकः। भामहकुन्तकादयो भाक्तवादिनः। आनन्दवर्धनानुयायिनस्तु ध्वनिवादिनः। सुनिश्चितमिदमङ्गीकरणीयं यत् काव्यार्थो रमणीय एव, अरमणीयस्याकाव्यार्थत्वात्। 'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथोऽपि रसात्मकं रमणीयमेवेत्याह।

## १. व्यङ्ग्यस्य वाच्येऽनन्तर्भावः

वाच्ये व्यङ्ग्यार्थस्यान्तर्भावो न शक्यसमर्थनः। वाच्ये विधिरूपे, व्यङ्ग्यार्थस्य निषेधरूपत्वात्, वाच्ये निषेधार्थके, व्यङ्ग्यस्य विधिरूपत्वात्। क्वचिद्वाच्यस्य विधिरूपे, निषेधस्यानुभवरूपत्वात्। तथा --

भ्रमधार्मिकविस्रब्धः स श्वा अद्य मारितस्तेन।
गोदावरीकच्छकुञ्जनिवासिना दृप्तसिंहेन'॥ (ध्वन्या० १।१९)

कस्याश्च सङ्केतस्थानं जीवितसर्वस्वायमानं धार्मिकसञ्चरणान्तराय दोषात् तदवलुप्यमानपल्लवकुसुमादिविच्छायीकरणाच्च परित्रातुमियमुक्तिः। तत्र स्वतः सिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु विप्रयोगप्रैषादिरूपोऽत्र विधिः।

अत्र भावतदभावयोर्विरोधाद् द्वयोस्तावन्न युगपद्वाच्यता, न क्रमेण, विरम्यव्यापाराभावात्। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति नयेनाभिधाव्यापारस्य विरम्यव्यापारासम्भवात्।

## २. व्यङ्ग्यस्य लक्ष्येऽनन्तर्भावः

अस्तु वा लक्षणा। तथापि द्वितीयस्थानसंक्रान्ताभावादसौ भवति। न हि मुख्यार्थबाधे लक्षणायाः प्रक्लृप्तिः। सा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्, सोऽयं तर्हि अन्वये विरोधः प्रत्येयः। न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः। अन्वयस्यावगमो नाभिधया, तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्यव्यापाराभावात्। एवं तस्यास्तात्पर्यशक्त्यैवावगमः। प्रमाणान्तरेण सोऽन्वयः प्रत्यक्षादिना बाधितः प्रतिपन्नोऽपि शुक्तिकायां रजतमिवेति तदवगमकारिणो वाक्यस्याप्रामाण्यात्। 'सिंहो वटुः' इत्यत्र द्वितीयकक्षानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकोल्लासानन्तरं अभिधातात्पर्यशक्तिद्वयव्यतिरिक्ता तावत्तृतीयैव शक्तिस्तद्बाधकशक्तिविधुरीकरणनिपुणा लक्षणा समुल्लसति। न चैवं

भक्तिरेव ध्वनिः । भक्तिर्हि लक्षणाव्यापारस्तृतीयकक्षानिवेशी । न चास्मिन् व्यङ्ग्यार्थान्तर्भावः ।

### ३. अनुमानेऽनन्तर्भावः

सहृदयश्लाघ्यः काव्यार्थो व्यङ्ग्य एव वाच्यसामर्थ्याक्षिप्तः । क्वाचिल्लक्ष्यसामर्थ्याक्षिप्त इति कृत्वा व्यङ्ग्यार्थाविद्योतिकाया व्यञ्जनाया अभिधामूलत्वं लक्षणामूलत्वं च सञ्जातम्; परन्तु व्यक्तिविवेकाख्ये ग्रन्थे काव्यानुमितिः प्रतिपादिता महिमभट्टेन । तद्रीत्या सर्वस्यापि व्यङ्ग्यप्रपञ्चस्यानुमान एवान्तर्भावः । अनुमानादेव व्यङ्ग्यप्रतीतिः ।

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते यतः कुतश्चिद् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवञ्च सम्बन्धाद् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्यवस्यति ।

तथा च पूर्वप्रत्युपस्थापिते 'भ्रमधार्मिक' इत्युदाहरणे गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुप्रापयति । सपक्षसत्त्व-विपक्षसत्त्व-पक्षसत्त्वलक्षणत्रिप्रकारकाणां लिङ्गानां स्वार्थानुमितावुपयोगाद् अनुमित्यैव व्यङ्ग्यप्रतीतिः । एवं क्लृप्तलिङ्गव्यापारेणैव निर्वाहेऽक्लृप्तव्यञ्जनाव्यापारोऽनुचितकल्पनः ।

न चानुमाने नियतसम्बन्धस्यापेक्षणीयत्वाद् व्यक्तौ तदनैयत्यम्, सम्भावनामात्रादेव तदुपपत्तेः, तथापि तत्रापि व्याप्तिकल्पनं शक्यसम्भवम् । 'गोदावरीकक्षकुञ्जं भीरुभ्रमणायोग्यम्, तत्र सिंहोपलब्धेः । यत्र यत्र सिंहोपलब्धितत्र तत्र भीरुभ्रमणाभावः, यथा—वनम् । यन्नैवं तन्नैवं यथा—गृहम् । एवं 'भ्रम धार्मिक' इति वाक्यस्य 'मा भ्रम' इत्यर्थोऽनुमानवेद्य एव ।

अत्राहुः काव्यप्रकाशकाराः —

'भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीति अनैकान्तिको हेतुः शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात्' ।

'न च वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धात् । इत्यसिद्धश्च, तत् कथमेवंविधाद् हेतोः साध्यसिद्धिः[1]' ।

---

१. का० प्र० ५, पृ० २५५ ( वामनी ) ।

"निःशेषच्युतचन्दनस्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनिदूतिबान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" ॥

इत्युदाहरणे गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति, नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि[१]।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्। एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते। तच्च व्यक्तिवादेऽदूषणमेवेत्युक्तं विश्वनाथेनापि—

'नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम्।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः'॥

व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव व्यङ्ग्यप्रतीतिरिति व्यक्तिवादिनस्तदुपपन्नमेव। व्यभिचारस्फूर्तिमतामपि सामाजिकानामसति च पक्षधर्मतानिश्चये सम्भावितादपि अर्थाद् व्यक्त्युल्लासः। तथा च संक्षेपः—

"अनुभावविभावानां वर्णना काव्यमुच्यते।
तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम्॥
भावसंयोजनाव्यङ्ग्यः परसंवित्तिगोचरः।
आस्वादनाख्योऽनुभवो रसः काव्यार्थ उच्यते"॥

( व्यक्तिविवेकव्याख्याने उद्धृतम् )

रसः काव्यार्थः, स च विभावानुभावव्यभिचारिभावानां संयोगादेव निष्पद्यते। तेन 'रसो वै सः' इति तैत्तिरीयश्रुतिसिद्ध एव सविशेषो निर्विशेषश्च रसः काव्यात्मेति वाक्यं रसात्मकं काव्यमिति सर्वं समञ्जसमिति संक्षेपः।



१ का० प्र० पञ्चमोल्लासः; २. सा० द० पञ्चमपरि०।

# विद्यावतां सकलमेव गिरां दवीयः

डॉ० मनुलताशर्मा
संस्कृत-प्रवक्ता
आर्यमहिलामहाविद्यालये
वाराणसी

❀❀❀

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव काऽपि रचना वचनावलीनाम्।
लोकोत्तरा च कृतिराकृतिरार्त्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः[1] ॥

मनीषिणां मनःप्रवृत्तिर्लोकहितकारिणी तु भवत्येव, एषां वचनविन्यासः, भावनिबन्धनम्, कल्पनाप्रसूता आकृतयश्च लोकोत्तरा भवन्ति। ते दर्शनमात्रेणैव मनस्तोषाधायकाश्च भवन्ति। तेषां निखिलं कार्यजातम् अनिर्वचनीयमलौकिकञ्च भवति। काव्यनिर्माणविधौ, कथानिबन्धने, चरित्रचित्रणप्रसङ्गे, मनोभावानां विशिष्टाभिव्यक्तौ, रसानां गहनप्रयोगविषये, सौहार्दहृद्यचेष्टानिरूपणे, कामसूत्रनिरूपणे, एवमेव सर्वेषां सोपानानां निर्माणे च तेषां वाचि विदग्धतैव भवति। रामो यद् महद्यशोभाजनं बभूव, रावणस्य च यद् यशः सङ्कोचमञ्चितं तत् सर्वमघटितघटनापटीयसां कवीनां वाग्वैदग्ध्यस्यैव प्रभावः। यथोक्तं विक्रमाङ्कदेवचरिते—

लङ्कापतेः सङ्कुचितं यशो यद् यत् कीर्तिपात्रं रघुराजपुत्रः।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः[2] ॥

इदं वैलक्षण्यं न केवलं विवेच्यविषयगतम्; अपि तु आत्माभिव्यक्तिसन्दर्भेऽपि तद् बहुशः स्फुरदवलोक्यते। तदेवात्र स्थालीपुलाकन्यायेन कानिचिन्निदर्शनानि प्रस्तुत्य समीक्ष्यते।

---

१. भामिनीविलासे प्रास्ताविकविलासः, श्लो० ६८।
२. विक्रमाङ्कदेवचरिते—१।२७।

विपरीतगुणानामेकत्र सन्निवेशस्तु विलक्षणेष्वेव महापुरुषेषु द्रष्टुं शक्यते। यथा–ज्ञाने मौनम्, शक्तौ क्षमा, त्यागे श्लाघाया अभावः। लोकव्यवहारेषु त्वेवमपि दृश्यते यद् मुखरा कविवाणो स्ववैदुष्यवर्णने यत्र क्वचन मुखरतरा भवति। अनया दृशा संस्कृतकवीनां प्रवृत्तयो वहुप्रकाराः प्रतीयन्ते। तत्र प्रथमे ते कवयः सन्ति, ये स्वकवित्ववंशदेशकालादिविषये आत्मप्रख्यापनविरताः सन्तः सरस्वतीसमाराधनरता भवन्ति। अपरे च केचन एतत्सम्बन्धे संयतवाचः सन्तः स्ववैशिष्ट्यं निरूपयन्ति, भङ्ग्यन्तरेण सङ्केतयन्ति च। भास-कालिदास-अश्वघोष-भारवि-भट्टि-दिङ्नाग-प्रभृतिभिर्महाकविभिः, आनन्दवर्धन-मम्मटादिभिराचार्यैः स्वकीयजीवनचरित-देशकालकवित्वविरुदादिसम्बन्धे कोऽप्युल्लेखो न कृतः। माघ-राजशेखर-क्षेमेन्द्र-प्रमुखैः कैश्चिदन्यैः कविभिराचार्यैश्च स्वपूर्वपुरुषाणां वैदुष्यप्रभावस्य अधिकारस्य च वर्णनं कुर्वद्भिः स्वविषये च संक्षिप्ता चर्चा कृताऽस्ति। शिशुपालवधे कविवंशवर्णनमेतत्कोटेर्निदर्शनमस्ति।

स्वसारस्वतस्रोतसः सातिशयं वर्णयितृषु कविषु **'सर्वं पण्डितराजराजतिलकेनाकारि लोकाधिकम्'**[1] इति समुद्घोषयितारः स्वकार्याणां लोकाधिक्यं वर्णयितारः पण्डितराजजगन्नाथा अग्रगण्याः। ते खलु संस्कृतकाव्यशास्त्रपरम्पराया अन्तिमाः प्रौढचिन्तका आसन्। आभरतात् पण्डितराजपर्यन्तं प्रवहमानायां काव्यशास्त्रीयपरम्परायां पर्याप्तं काव्यशास्त्रीयं चिन्तनं मननञ्च जातम्। ततः पूर्वतनैरालङ्कारिकैर्ये किल काव्यशास्त्रीया विषया अस्पृष्टा अनालोचिता वा आसन्, तान् प्रतिपादयद्भिः पण्डितराजैरेवं व्याहृतमासीत्—

परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता।
तिमीन्द्राः सङ्क्षोभं विदधतु पयोधेः पुनरिमे
किमेतेनायासो भवति विफलो मन्दरगिरेः[2]॥

अत एव तैः स्वकीयो रसगङ्गाधरो मननजलधिमालोड्य उन्नीतो ललितमणिर्व्यपदिष्टः। एतस्मादेव कारणादितरेषामलङ्कारग्रन्थानां गलितगर्वकारित्वमस्य ग्रन्थस्य तेषां गर्वोक्तौ सङ्गच्छते—

---

१. भामिनीविलासे शान्तविलासः, श्लो० ४५; २. रसगङ्गाधरे—१.५।

निमग्नेन क्लेशैर्मननजलधेरन्तरुदरं
मयोन्नीतो लोके ललितरसगङ्गाधरमणिः।
हरन्नन्तर्ध्वान्तं हृदयमधिरूढो गुणवता-
मलङ्कारान् सर्वानपि गलितगर्वान् रचयतु[1] ॥

स्वप्रतिभाप्रखरताबोधात् तैः स्वनिर्मितानि पद्यान्येवोदाहृत्य सगर्वं तदुल्लेखः कृतः। तथा हि—

निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयाऽत्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसाऽपि गन्धः
कस्तूरिकाजननशक्तिभृता मृगेण[2] ॥

तदानीन्तनेन विद्वद्धौरेयेण अप्पय्यदीक्षितेन सह विरोधे जाते तद्विषयिणी अभिव्यक्तिरपि उग्रैव जाता। रसगङ्गाधरस्यालङ्कारविवेचनप्रसङ्गेऽधिकतरेण अप्पय्यदीक्षितविवेचितालङ्काराणां लक्षणानामुदाहरणानाञ्च खण्डनमभवत्।

एतन्मात्रेणैव सः सन्तुष्टो नाभवत्; अपि तु अप्पय्यदीक्षितरचितायाश्चित्रमीमांसायाः खण्डनं 'चित्रमीमांसाखण्डनम्' इति ग्रन्थं निर्माय निस्सङ्कोचं निर्भीकतापूर्वकञ्च स्वकीयगर्वगौरवभावः स्फुटं प्रदर्शितः[3]।

स्वां श्रुतिसुखदां सरसपदावलीं प्रति तेषामभिमान एतेन श्लोकेन स्पष्टं प्रतीयते—

आमूलाद् रत्नसानोर्मलयवलयितादा च कूलात् पयोधे-
र्यावन्तः सन्ति काव्यप्रणयनपटवस्ते निश्शङ्कं वदन्तु।
मृद्वीकामध्यनिर्यन्मसृणरसझरीं माधुरीं भाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः[4] ॥

पदरचनाया इमां माधुरीं द्राक्षाक्षीरेक्षुमाक्षिकादीनां धुर्यैरपि माधुर्यैर्वन्दनीयामसौ मन्यते[5]। अन्यत्र कामालसानां सुरसुन्दरीणामधरोष्ठानां माधुर्यादपि

---

१. रसगङ्गाधरे—१।४; २. तत्रैव—१।६।
३. चित्रमीमांसाखण्डने, प्रस्तावना, श्लो० ३।
४. भामिनीविलासे शान्तविलासः, श्लो० ३८।
५. भामिनीविलासे शान्तविलासः, श्लो० ४४।

स्वकीयां कवितां मधुरतरां मन्वानाः पण्डितराजाः स्वोद्विग्नतामपि प्रदर्शयन्तः कथयन्ति—

आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस ।
स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम[1] ॥

मधु वा द्राक्षा वा साक्षादमृतं वा सुन्दरीणामधरामृतं वा नाम आनन्दोद्भवं विदधातु कस्यचिन्मनसि, जगन्नाथभणितिस्तु येषां कृते आनन्ददायिनी न भवति, ते तु जीवन्तोऽपि मृतवदेव इत्यपि पण्डितराजैः स्वकाव्यविषये सगर्वं भणितम्[2] । अयमेव आत्माभिमानस्तं कविसमवायसमक्षं वक्तुं प्रेरयति—

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रवन्
मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणाङ्गिराम् ।
काव्यं तर्हि सखे ! सुखेन कथय त्वं सम्मुखे मादृशां
नो चेद् दुष्कृतमात्मना कृतमिव स्वान्ताद् बहिर्मा कृथाः[3] ॥

स्वकाव्योत्कर्षविषये पण्डितराजा एवं ब्रुवन्ति—

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन् मूर्द्धानं नृपशुरथवाऽयं पशुपतिः[4] ॥

स्वकाव्यरचनाविषये तन्माधुर्यविषये च सविश्वासं गर्वाभिव्यक्तौ पण्डितराजवद् नैषधकारः श्रीहर्षोऽपि सुतरां दरीदृश्यते । अत्रेदमप्यवधेयं यत् पण्डितराजा यथा शास्त्रकाराः काव्यकाराश्च सन्ति, तथैव नैषधकाराः श्रीहर्षा अपि शास्त्रकाराः काव्यकाराश्च आसन् । अत एव तेषां प्रातिभं प्रकर्षमुभयत्रापि समानरूपेण उदात्तमिति सर्वेऽपि प्रेक्षावन्तो विद्वांसः स्वीकुर्वन्ति । एतद्विषयिणी तन्मुखान्निस्सृता गर्वोक्तिरेवं प्रस्तोतुं शक्यते—

---

१. भामिनीविलासे, शान्तविलासः, श्लो० ४१ ;  २. तत्रैव, श्लो० ४२ ।
३. तत्रैव, श्लो० ४३ ;  ४. तत्रैव, श्लो० ३९ ।

दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं
तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् ।
स परमपरः क्षीरोदन्वान् यदीयमुदीर्यते
मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम्[1] ॥

तेषां काव्यं शास्त्रञ्च विलोक्य स्पष्टमेवानुभूयते यत् तेषां समक्षं नूनमेव भारती लीलायते—

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयङ्गमो पतिस्तुल्या रतिर्योषिताम्[2] ॥

नैषधस्य दुर्बोधताविषयेऽपि तेषां दृढास्तर्काः सन्ति यत् प्राज्ञम्मन्याः खला अत्र मा खेलन्तु, अत्र किमस्तीति सावज्ञं दर्पाभिव्यक्तिर्मा विदध्युः, इत्येवमभिलक्ष्य तेन काव्ये काश्चिद् दुर्बोधा ग्रन्थयः सन्निवेशिताः —

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः[3] ॥

स्वलौकिकं पारलौकिकञ्चोत्कर्षं वर्णयन्तस्ते कथयन्ति—

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात् कुरुते समाधिषु परंब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षिधर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदोयादियम्[4] ॥

अन्येषां पाण्डित्ये पल्लवग्राहित्वमारोपयन् स्वकीये च गाम्भीर्यातिशयं मन्यमानोऽनर्घराघवकारो मुरारिरेवं ब्रवीति—

---

१. नैषधचरिते, कविप्रशस्तिः, श्लो० २ ।
२. संस्कृतसाहित्येतिहासः, बलदेवोपाध्यायः, पृ० २२७ ।
३. नैषधमहाकाव्ये, कविप्रशस्तिः, श्लो० ३ ।
४. तत्रैव, श्लो०४ ।

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः[1] ॥

कोमलपदावलि-सुकुमारभावावलि-प्राञ्जलपदविन्याससङ्गीतात्मकताप्रभृतिषु विषयेषु प्रख्यातोऽनितरसाधारणं यशो बिभ्राणः संस्कृतगीतिकारो जयदेवः स्वकाव्योत्कर्षविषये स्वाभिमानं व्यञ्जयन् एवं ब्रूते—

साध्वी माध्वीक ! चिन्ता न भवति भवतः शर्करे ! कर्कशाऽसि
द्राक्षे ! द्रक्ष्यन्ति के त्वाममृत ! मृतमसि क्षीर ! नीरं रसस्ते।
माकन्द ! क्रन्दकान्ताधर ! धरणितलं गच्छ यच्छन्ति यावद्
भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि[2] ॥

'पीयूषवर्ष' इति नामान्तरेणापि स्वोल्लेखं कुर्वन् प्रसन्नराघवकारः, चन्द्रालोककारश्च जयदेवः स्वकीयं वाणीविलासम् 'असमरसनिष्यन्दमधुरः' इति ख्यापयन् स्फुटं व्याहरति—

विलासो यद् वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः[3] ॥

पीयूषवर्षापरनामधेये जयदेवे स्वरचनोत्कर्षं प्रति गहने विश्वासे सत्यपि दर्पौद्धत्यं नास्ति। संयतभावाभिव्यक्तिरेव दृश्यते। यत्र पण्डितराजेन सडिण्डिममुद्घोषितम्—

'परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये[4]'।

तत्र चन्द्रालोके मम्मटादिप्राचीनाचार्याणामुक्तिरूपं ज्योतिष्तत्वं प्रणमद्भिर्जयदेवैः स्पष्टमेवोक्तं यद् विदुषामाश्रयेणैव तद्गुणास्त्रसरेणव इव संसारे प्रकाशिता भवन्ति[5]। स्वस्य अलङ्कारग्रन्थस्य तुलनाम् अमृतचन्द्रमसोः प्रकाशेन सह कुर्वाणा[6] वर्णयन्ति यदयं ग्रन्थो गम्भीरभावैः समन्वितानां युक्तीनामाधायको ललितशृङ्गारादि-

---

१. संस्कृतसाहित्येतिहासः, चन्द्रशेखरपाण्डेयः, पृ० २१०।
२. गीतगोविन्दे—१२।१२ ;    ३. प्रसन्नराघवे—१।१४।
४. रसगङ्गाधरे—१।५।    ५. चन्द्रालोके—१।४।
६. तत्रैव—१०।५।

रसानामेकमेव निवासस्थानं साहित्यशास्त्रस्य क्षीरसागरश्चास्ति। अस्याध्ययनेन विद्वांसो मनोरमां कीर्तिं लप्स्यन्ते, काव्यरसामृतस्य च पानं करिष्यन्ति—

युक्त्यास्वाद्यलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत्सेव्यः समाश्रीयताम्।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्मज्जगद्
जाग्रद्भासुरपद्मकेसरयशःशीतांशुरस्माद् बुधाः[1] ॥

रसगङ्गाधरकाराः पण्डितराजाः स्वकीयं ग्रन्थम् इतरपाण्डित्यमर्दकत्वेन साधयितुं समीहते; किन्तु जयदेवो मृगनयनीनां स्वतःसुन्दराणि नेत्राणि दोषभूतेन कज्जलेनापि यथा शोभामेव धारयन्ति, तथैव दूषितेन मद्ग्रन्थेन पूर्वाचार्याणां मतानि भूषितान्येव भविष्यन्तीति सविनयं व्याहरति[2]।

चन्द्रार्धचूलचरिताश्रयचारुहरविजयकारैः रत्नाकरैरपि स्वविषये स्वकाव्य-वैभवविषये च यत् प्रोक्तं तदपि प्रेक्षणीयं वर्तते। बृहस्पतेरपि स्वकीयां वाणीं गरीयसीं मन्वानास्ते कथयन्ति—

ललितमधुराः सालङ्काराः प्रसादमनोहरा
विकटयमकश्लेषोद्धारप्रबन्धनिरर्गलाः।
असदृशमतीश्चित्रे मार्गे ममोद्गिरतो गिरो
न खलु नृपतेश्चेतो वाचस्पतेरपि शङ्कते[3] ॥

अन्यत्र वर्णितमस्ति—

सान्द्रानन्दामृतरसपरिस्पन्दनिःस्यन्दिनीना-
मस्मद्वाचामतिशयजुषां वस्तुतत्त्वाभिधाने।
प्रौढज्योत्स्नाधवलविकसद्दिग्वधूकर्णपूर-
ब्रह्मस्तम्भस्तबकयशसां कोऽपि टाङ्कारटङ्कः[4] ॥

संस्कृत-प्राकृतापभ्रंशादीनां विविधभाषाणां विलक्षणवेत्तारः काव्यकाराः शास्त्रकाराश्च राजशेखरा अप्यस्मिन् विषये पृष्ठवर्तिनो न सन्ति। आत्मानं कवि-राजं च वाल्मीकिभर्तृमेण्ठ-भवभूतीनां विग्रहवन्तो मन्वानास्ते सगर्वं कथयन्ति—

बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया स वर्तते सम्प्रति राजशेखरः[5] ॥

---

१. चन्द्रालोके—१।३; २. तत्रैव—१।५।
३. हरविजये कविप्रशस्तिः, श्लो० २।
४. तत्रैव, श्लो० ३; ५. बालरामायणे—१।१६।

अस्मिन्नेव क्रमे वैदर्भीविचक्षणस्य विक्रमाङ्कदेवचरितस्य रचयितुर्बिल्हणस्य गर्वोक्तयोऽपि प्रेक्षणीयतां व्रजन्ति । वैदर्भीं रीतिं प्रशंसता तेनोक्तम्—

अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम्[1] ॥

अन्यच्च तेनोच्यते रसध्वनिवक्रोक्तिमार्मिका विद्वांस एव मदीयकवितायाः समादरं कर्तुं क्षमाः, अन्ये तु शुकवत् पठन्तु नाम—

रसध्वनेरध्वनि ये चरन्ति संक्रान्तवक्रोक्तिरहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम्[2] ॥

अस्मिन् सन्दर्भे संयतभाषिणां कवीनां गर्वोक्तयोऽपि द्रष्टव्याः । एतद्दृशा सरस्वत्या गम्भीरसमुपासका बाणभट्टाः प्राथम्येन परिगणनीयाः । तैः स्वकीय उच्चः, गुणगौरवशाली विद्यानुरागी च वंशः, तदुद्भववृत्तं च पौराणिकपद्धत्या वर्णितम्[3] । कुबेर इति नाम्नः स्वपूर्वपुरुषस्य गृहस्य शास्त्रमयात्मकं गृहपरिवेशं चित्रयन्तः कथयन्ति यत् तदन्तेवासिनो यजूंषि, सामानि च गायन्तः सशङ्का भवन्ति स्म, यतो हि तत्रत्याः पिञ्जरस्थाः शुकाः सारिकाश्चापि उच्चारणत्रुटिं सङ्केतयितुं क्षमा आसन्[4] । बाणपितुश्चित्रभानोर्हवनकालिकश्रमजन्यानां प्रस्वेदबिन्दूनां भगवत्याः सरस्वत्याः करकमलाभ्यां प्रोञ्छनमपि सगर्वं वर्णितमस्ति तैः । चित्रभानुना स्वकीयैः कीर्तिकिरणैः सप्तभुवनानि समुज्ज्वलीकृतानीत्यपि सावष्टम्भं वर्णितमस्ति[5] ।

स्वपात्राणां वर्णने उपमा-उत्प्रेक्षा-रूपकाद्यलङ्काराणां जालमिव रचयन्तः स्वकल्पनाशक्तेः सकलवैभवं प्रस्तुवन्तोऽपि बाणभट्टाः स्वविषये संयतभाषिण एवासन् । तेषां पाण्डित्यमगाधं प्रतिभा च अपारा आसीत् । विविधशास्त्राणां ते पारदृश्वानो विद्वांस आसन् किन्तु हर्षवर्धनैः 'महानयं भुजङ्गः' इत्युक्ते स्वभुजङ्गताया निषेधं कुर्वन्तः परिमितशब्दैरेवात्मानमुत्तरयाञ्चक्रुः । यथा—

---

१. विक्रमाङ्कदेवचरिते—१।९;　　२. तत्रैव, १।२२ ।
३. कादम्बरी, प्रारम्भिकश्लोकाः—१०-१९ ;　　४. तत्रैव, १२ ।
५. तत्रैव, श्लो० १९ ;

'नार्हसि मामन्यथा सम्भावयितुमविशिष्टमिव। ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम्। यथाकालमुपनयनादयः कृताः संस्काराः। सम्यक् पठितः साङ्गो वेदः। श्रुतानि च यथाशक्ति शास्त्राणि। दारपरिग्रहादभ्यागारिकोऽस्मि। का मे भुजङ्गता[1]।

कैशोर्यावस्थागतं चापल्यं तज्जन्याया इत्वरताया अपि वर्णनं तैः स्वाभाविकरूपेणैव विहितमस्ति—

'लोकद्वयाविरोधिभिरस्तु चापलैः शैशवशून्यमासीत्। अत्रानपलापोऽस्मि'[2]।

हर्षवर्धनात् प्राप्तां क्षमामधिकृत्य या सहजा स्वाभाविकी च स्वीकृतिपरा अभिव्यक्तिस्तैः कृता सा दर्शनीयाऽस्ति—

स्वल्पैरेव चाहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य, प्रेम्णः, विस्रम्भस्य, द्रविणस्य, नर्मणः, प्रभावस्य च परां कोटिमानीयते नरेन्द्रेणेति[3]।

संस्कृतनाट्यपरम्परायाः समुज्ज्वलेन मणिदीपेन प्राप्तसारस्वतवंशविशिष्टगुणगणेन साहित्यधुरीणेन भवभूतिनाऽपि स्वकीयस्य आत्माभिमानस्योत्कृष्टाऽभिव्यक्तिरल्पैरेव शब्दैः कृता। यः खलु भवभूतिरात्मानं पदवाक्यप्रमाणज्ञम्[4] इत्युद्घोषयत्—

'यं ब्रह्माणमियं देवो वाग्वश्येवानुवर्तते'[5]।

सोऽपि तात्कालिकाद् मनीषिनिवहात् काञ्चिदनपेक्षितामुपेक्षां प्राप्य यत्र तत्र गर्वविजृम्भिता अभिव्यक्तीः सुचारु विहितवान्। तथा हि—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यते न मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी[6]॥

अस्मिन्नेव क्रमे कवीनामाचार्याणाञ्च कतिपयलोकोत्तरा नम्रोक्तयोऽपि प्रेक्षणीयतां व्रजन्ति। एतादृशा भारतीयसंस्कृतेः प्रतिनिधिभूतानां कविराजराजिमुकुटालङ्काररूपाणां महाकविकालिदासानामभिव्यक्तयोऽतितरां शोभन्ते। महा-

---

१. हर्षचरिते, पृ० १३५;
२. तत्रैव, पृ० १३६।
३. तत्रैव, पृ० १४०;
४. महावीरचरिते, प्रस्तावना।
५. उत्तररामचरिते—१।२;
६. मालतीमाधवे—१।८।

वाग्विभवाः सन्तः 'रघुवंशे' ते स्वकीयां मतिम् 'अल्पविषयाम्', आत्मानञ्च 'मन्द' इति, 'तनुवाग्विभव' इति च ख्यापयन्तः कथयन्ति—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥
मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः[1] ॥

समग्रे संस्कृतसाहित्ये सर्वोत्कृष्टरूपेण समादृतं रघुवंशनामानं ग्रन्थं निर्मायाऽपि ते स्वकीयां लेखनप्रतिभां चपलतामेव ब्रुवन्ति—

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः[2] ॥

नीरक्षीरविवेकिनः सतो विदुष एव स्वकाव्यस्य श्रोतॄन् मन्वानैस्तैः सविश्वासमेवमुक्तम्—

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा[3] ॥

मालविकाग्निमित्रस्य प्रस्तावनायां पारिपार्श्विकेन प्रथितयशसां भासकविपुत्रसौमिल्लकादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां परिषदो बहुमानः कथमिति प्रश्ने कृते स्पष्टरूपेणैव सूत्रधारमुखेन भणितमस्ति—

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः[4] ॥

स्थालीपुलाकन्यायेन विभिन्नकवीनामाचार्याणाञ्च आत्मप्रख्यापनसन्दर्भे कृता अभिव्यक्तीः समालोड्य निष्कर्षरूपेण इदमेव वक्तुं शक्यते यदपारसाहित्यसंसारस्य निर्मातारः, नवनवोन्मेषशालिप्रतिभावन्तः स्वयंभुवः पदवीं दधानाः कवयो मनीषिणश्च लोकोत्तरा एव भवन्ति। काव्यप्रणयनविधौ ते यथा पाटवं भजन्ते, तथैव आत्माभिव्यक्तिविषयेऽपि तेषां वाणी क्वचिद् गर्वाचलचुम्बिनी क्वचिच्च नम्रानना भवति । साहित्ये बहुप्रकारा इमा उक्तयः सर्वत्रापि अतिशयतामतिरेकं च

---

१. रघुवंशे—१।२-३ ;          २. तत्रैव—१।९ ।
३. तत्रैव—१।१० ;          ४. मालविकाग्निमित्रे—१।२ ।

भजन्ते । अस्मिन् प्रसङ्गे प्रसन्नराघवकारस्य जयदेवस्य एका उक्तिः स्मर्यते यामुद्धृत्योपसंहरामि—

येषां कोमलकाव्यकौशलकलालीलावतीभारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिताः
तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः[1] ॥ इति ।

१. प्रसन्नराघवे—१।१८ ।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५ प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन विधेयः।



रजिस्टर्ड न्यूजपेपर्स एक्ट के अन्तर्गत

# विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | डॉ० हरिश्चन्द्रमणि त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | डॉ० आद्या प्रसाद मिश्र |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्रीगिरीश चन्द्र |
| | राष्ट्रियता | भारतीय |
| | पता | विजय-प्रेस, सरसौली वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं आद्या प्रसाद मिश्र घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
आद्या प्रसाद मिश्र
अनुसन्धानसंस्थाननिदेशक,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय
वाराणसी—२२१ ००२.

लघु–ग्रन्थमाला

[ ५४ ]

श्रीलौगाक्षिभास्करकृतः

# अर्थसङ्ग्रहः

पण्डितराजश्रीशैलताताचार्यप्रणीत-'तन्त्रप्रकाशिका'-व्याख्योपेतः

सम्पादकः

ना० रा० श्रीनिवासताताचार्यः

आचार्योऽध्यक्षश्च

धर्मशास्त्र-मीमांसाविभागस्य

संस्कृतविद्याधर्मविज्ञानसंकाये

काशीहिन्दूविश्वविद्यालयस्य

वाराणस्याम्



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०५३

# किञ्चित् प्रास्ताविकम्

विदितमेवेदं सर्वेषां सुधियां यद् भगवता जैमिनिना महर्षिणा प्रणीतस्य मीमांसादर्शनस्य प्रकरणग्रन्थः **'अर्थसङ्ग्रहः'** इति। ग्रन्थोऽयं न्यायवैशेषिकदर्शने तर्कसङ्ग्रह इव मीमांसादर्शनस्य सारभूतमर्थमधिजिगांसूनामुपकाराय श्रीमद्भिस्तत्रभवद्भि**र्लौगाक्षिभास्कराचार्यैः** प्रणीतः, भारते सम्प्रति सर्वत्र M. A. कक्षायां शास्त्रिकक्षायां च पाठ्यग्रन्थत्वेन च प्रथितः। तर्कसङ्ग्रहस्य यथाऽनेका व्याख्योपव्याख्यास्समुपलभ्यन्ते न तथाऽस्य, किन्तु द्वित्रास्संस्कृतव्याख्यास्सन्ति। तासु इयमन्यतमा पण्डितराज**श्रीशैलताताचार्य**विरचिता **तन्त्रप्रकाशिका**-नाम्नी। इयं च व्याख्या प्रायेण षष्टिवर्षेभ्यः प्राक् पञ्चनदसंस्कृतकलाशालायां मीमांसाशास्त्राध्यापनसमये विद्वद्वर्यैर्व्याख्यातृमहाशयैः छात्राणामेतच्छास्त्रार्थावगमक्लेशं स्वयमनुभूय तदपाकरणाय सरलया शैल्या विरच्य स्वप्रयासेन छात्रकल्याणाय सञ्चालितायामुद्यानपत्रिकायां [ एकैकं प्रकरणं यावत् ] भागशः प्रकाशिता। सम्प्रति नष्टप्रायाऽप्यस्माभिः कथञ्चित् सङ्कलय्य सर्वेषां हितदृष्ट्या सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाश्यते।

## ग्रन्थशैली

अस्यां व्याख्यायां स्वव्याख्येयग्रन्थस्य अर्थसङ्ग्रहस्य मूलग्रन्थकर्तॄणां जैमिनिमहर्षिप्रभृतीनां सूत्र-भाष्य-वार्तिकादिपङ्क्त्युद्धरणपूर्वकं तत्प्रतिपादितार्थमूलकत्वं संस्थाप्य यत्र कुत्रचिद् मूलग्रन्थविरोधशङ्कायां विलक्षणशैल्या स्वप्रतिभया परिहारान्तरं च प्रत्यपादि, यथा धर्मलक्षणकथनावसरे—"चोदनालक्षणोऽर्थो धर्मः" इति सूत्रार्थविरोधमाशङ्क्य 'अत्रेदं प्रतिभाति' इत्यारभ्य [ ६ तमे पृष्ठे ] समाहितम्। एवं विधि-मन्त्र-नामधेय-निषेधार्थवाद इति [ १४ तमे पृष्ठे ] अर्थवादस्य विध्यनन्तरमुद्देशमकृत्वा अन्तेकरणं मूलग्रन्थविरुद्धम्, तथा विधेर्विभाजनावसरे अधिकारविधिः प्रयोगविधिश्चेति [ १९ तमे पृष्ठे ] अनयोर्व्युत्क्रमेण निर्देशोऽपि मूलविरुद्ध इत्याशङ्क्य युक्तायुक्तत्वविमर्शश्च सोपपत्ति अकारि। प्रायेण अस्य अर्थसङ्ग्रहग्रन्थस्य आपदेवकृतमीमांसान्यायप्रकाशग्रन्थानुसारित्वं च सप्रमाणं न्यरूपि। स्थालीपुलाक-

न्यायेन अस्माभिर्द्वित्राणि स्थलान्युदाहृतानि । ग्रन्थस्य लघुत्वात् तदध्येतॄणां स्वत एवेतोऽन्ये विशेषाः प्रतोयेरन्निति एतावता विरम्यते । एतैर्व्याख्यातृस्वामिभिः पूर्वं मोमांसापरिभाषायाः (१) अक्षरार्थः, (२) परिष्कारश्चेति व्याख्याद्वयं विधाय तन्त्रप्रकाशिका विरचितेति तदोयपद्येनैव स्फुटमवगम्यते, तदाह —

**मोमांसापरिभाषायाः कृत्वा विवरणद्वयम् ।**
**अर्थसङ्ग्रहमद्याहं विवृणोमि यथामति ॥** इति ।

आशास्यते समयान्तरे तद्ग्रन्थद्वयस्यापि प्रकाशनं भविष्यतीति ।

## कृतज्ञतानिवेदनम्

एतादृशदुर्लभग्रन्थानां प्रकाशनद्वारा विद्वन्मण्डलस्य महान्तमुपकारं कुर्वतां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिमहोदयानां विद्वद्वरेण्यानां **डॉ० मण्डनमिश्रमहाभागानाम्**, एतत् प्रकाशनार्थमस्मान् तदा तदा सम्प्रेर्य समुचितव्यवस्थां विहितवतां पण्डितवर्याणां प्रकाशनाधिकारिणां **डॉ० हरिश्चन्द्रमणि**महोदयानां च सविधे हार्दिकीं कृतज्ञतां सविनयं निवेदये । स्वोयं श्रममविगणय्य एतद्ग्रन्थमुद्रणकार्यं साधु सम्पादितवते **श्रीगिरीशचन्द्र**महोदयाय कार्तज्ञ्यं च प्रकटयामि ।

इति सुधीविधेयः
**ना० रा० श्रीनिवासताताचार्यः**
अध्यक्षः
धर्मशास्त्र-मीमांसाविभागे
काशीहिन्दूविश्वविद्यालयस्य

# विषयानुक्रमणिका

॥ श्रीः ॥

श्रीलौगाक्षिभास्करकृतः

# अर्थसङ्ग्रहः

## ॥ अथोपोद्घातपरिच्छेदः ॥

**वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः ।**
**कुरुते जैमिनिनये प्रवेशायार्थसङ्ग्रहम् ॥**

### ॥ तन्त्रप्रकाशिका ॥

**मीमांसापरिभाषायाः कृत्वा विवरणद्वयम् ।**
**अर्थसङ्ग्रहमद्याहं विवृणोमि यथामति ॥**

**नापयाति हृदयान्मम क्षणं नाथ एष नलिनायतेक्षणः ।**
**देशिका मयि दयार्द्रचेतसः केन मे न हृदयं प्रहृष्यतु ॥**

**अथ परमकारुणिको भगवान् जैमिनिर्धर्मविवेकाय द्वादशलक्षणीं प्रणिनाय ।**

---

**वासुदेवमिति** । वसुदेवस्यापत्यमित्यर्थः । सर्वस्मिन् वस्तुनि वसतीति वासुः । दीव्यति प्रकाशत इति देवः । वासुश्चासौ देवश्च वासुदेव इति च ब्रह्मलक्षणमप्यभिसंहितम् । एवंलक्षणं ब्रह्म हिरण्यगर्भः शिवो वेति शङ्काव्यावर्तनायोक्तम्—**रमाकान्तमिति** । नत्वा नमस्कृत्य । कीर्त्यनुवृत्तये स्वनाम कीर्तयति—**लौगाक्षीति** । कुरुत इत्यात्मनेपदमविवक्षितम्, क्रियाफलस्य प्रवेशस्याकर्त्रभिप्रायत्वात् । विवक्षितं वा । कर्त्रभिप्रायायाः कीर्तेः क्रियाफलत्वात् । जैमिनेर्नयः शास्त्रं मीमांसेत्यर्थः । प्रवेशः प्रतिपाद्यार्थज्ञानम् । व्युत्पत्तिरिति यावत् । अर्था मीमांसाशास्त्रप्रतिपाद्या विषयाः, तेषां सङ्ग्रहः, अविस्तरेण प्रतिपादको ग्रन्थ इति ।

**अथेति** । ग्रन्थारम्भे निरर्थकं श्रुत्या मङ्गलार्थम् । स्तुतये जैमिनेः शास्त्रकरणप्रवृत्तिहेतुभूतं गुणं कीर्तयति—**परमकारुणिक इति** । करुणा अस्यास्तीति कारुणिकः ।

**तत्रादौ धर्मजिज्ञासां सूत्रयामास—अथातो धर्मजिज्ञासेति । अत्राथशब्दो वेदाध्ययनानन्तर्यवचनः । अतश्शब्दो हि वेदाध्ययनस्य दृष्टार्थत्वं ब्रूते । स्वाध्यायोऽध्येतव्य इत्यध्ययनविधौ तदध्ययनस्यार्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात् । तथा च वेदाध्ययनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययनमतो हेतोर्धर्मस्य वेदार्थस्य जिज्ञासा । कर्तव्येति शेषः । जिज्ञासापदस्य विचारे लक्षणा । अतो धर्मविचारशास्त्रमिदमारम्भणीयमिति शास्त्रारम्भसूत्रार्थः ।**

---

महर्षेः शास्त्रकरणसामर्थ्यपूर्तिमनुसन्दधाति—**भगवानिति** । धर्मविवेकाय ज्योतिष्टोमादिरेव धर्मः, न चैत्यवन्दनादिः, ज्योतिष्टोमादिर्धर्म एव नाधर्म इति धर्माधर्मनिष्कर्षायेत्यर्थः । प्रणिनाय चकार । अन्यत्सर्वमत्र परिभाषोपक्रमवाक्यवदनुसन्धेयम् ।

ननु यदि धर्मविवेकाय द्वादशलक्षणी तर्हि साऽनारम्भणीया । धर्मविवेकस्यानपेक्षितत्वात् । न च स्वाध्यायोऽध्येतव्य इति विधिना स्वाध्यायपदवाच्यवेदार्थभूतधर्मनिर्णयोद्देशेन स्वाध्यायाध्ययनस्य विहितत्वात् स्वाध्यायमधीत्यावश्यं तदर्थभूतधर्मज्ञानं सम्पादनीयम्, तच्च विचारमन्तरा न सम्भवतीति तद्विचारपरा द्वादशलक्षण्यारम्भणीयेति वाच्यम् । लोकतः प्राप्तत्वेनार्थज्ञानार्थतयाऽध्ययनस्याविधेयत्वात् तस्मिन् विधावध्ययनस्यादृष्टार्थतया विधानेनार्थज्ञानस्यासम्पादनीयत्वादित्याशङ्क्य शास्त्रकारेणैवात्र परिहार उक्त इति प्रदर्शयितुमाह—**तत्रेति** । द्वादशलक्षण्यामित्यर्थः । धर्मजिज्ञासां धर्मविचारम् । अथातो धर्मजिज्ञासेति सूत्रयामास, अनेन सूत्रेण बोधयामासेत्यर्थः । कर्तव्यतया बोधनं विवक्षितम् । सूत्रं व्याख्याति—**अत्रेति** । अस्मिन् सूत्र इत्यर्थः । **वेदेति** । वेदाध्ययनादानन्तर्यं तस्य वचनः वाचकः । ननु वेदाध्ययनस्य पूर्वमनुक्तत्वेनानुपस्थितत्वात् कथं तदानन्तर्यवाचित्वमस्याथशब्दस्येति चेदुच्यते । अथेत्यस्य अनन्तरमिति तावदर्थः । तत्र कस्मादनन्तरमित्याकाङ्क्षायां यस्य पूर्ववृत्तत्वं विना उत्तरत्र क्रियमाणो विचारो नोपपद्यते तस्मादनन्तरमिति सामर्थ्यात् सिध्यति । तत्र वेदवाक्यान्युदाहृत्य तत्प्रतिपाद्यस्य धर्मस्योपरि विचारकरणाद् वेदवाक्याधिगमस्तावद् विचारस्यावश्यापेक्षितः । न ह्यज्ञातवेदवाक्यः पुरुषस्तत्प्रतिपाद्यं धर्मं विचारयितुं शक्नोति । सोऽयं वेदवाक्याधिगमोऽध्ययनमन्तरा न सम्भवतीति वेदाध्ययनमेव वेदवाक्यार्थविचारात् पूर्वं वृत्तमिति गम्यते । तस्माद्युक्तमथशब्दोऽयं वेदाध्ययनानन्तर्यवाचीति । सूत्रस्थातश्शब्दस्य प्रकृत्यर्थमाह—**अतश्शब्द** इति । नन्वत इत्यत्र इदंशब्दः सन्निहितपरामर्शित्वात् पूर्वमथशब्दार्थतयोपस्थितं वेदाध्ययनं परामृष्टुं शक्नोति । न तु तस्य दृष्टार्थत्वम् । पूर्वमनुपस्थितत्वादिति चेद् ब्रूमः ।

सत्यमध्ययनमात्रमिदंशब्दः परामृशति। तत्राप्यथशब्देन वृत्तत्वेनाध्ययनोपस्थित्या वृत्तमध्ययनमिह परामृश्यते। तस्यैव च पञ्चम्यर्थस्तसिर्हेतुत्वं बोधयति। तथा च वृत्ताद् वेदाध्ययनादित्यतश्शब्दस्यार्थः। एवं हि मत्वा प्राचां व्याख्यानम् 'अतः अध्ययनस्य वृत्तत्वाद्धेतोः' इति। तथापि ग्रन्थकारस्यायमभिप्रायः—वृत्ताद्वेदाध्ययनाद्धेतोर्विचारः कर्तव्य इतीममर्थं श्रुतवता यदि शङ्क्येत वृत्तस्य वेदाध्ययनस्य कथं विचारहेतुत्वम्, वेदाध्ययनं तावत् कृतमस्तु विचारो न क्रियताम्, वेदाध्ययने कृते सति विचारोऽवश्यं कर्तव्य इति को निर्बन्ध इति तत्रेदं वक्तव्यम्। यदि वेदमधीत्य विचारो न क्रियेत, तर्हि विचारसाध्यमर्थज्ञानं न स्यात्। तदभावे कृतं वेदाध्ययनं निष्प्रयोजनं स्यात्। अदृष्टं प्रयोजनमिति चेत् स एव दोषः। सम्भवतो दृष्टस्यापरित्याज्यत्वात्। एवं कृतमध्ययनमदृष्टफलकत्वस्यानुपपन्नत्वाद् दृष्टफलकत्वाय विचारस्यावश्यकर्तव्यतां बोधयतीति विचारहेतुर्भवतीति। एवं प्रथमं वृत्तस्य वेदाध्ययनस्य विचारहेतुत्वमुक्त्वा तत्रोक्तरीत्या शङ्कायामुत्थितायां परिहारकरणेऽयमर्थविस्तरः स्यान्नार्थसङ्ग्रह इति मत्वा तात्पर्यार्थ एव शब्दार्थतयोक्तः— इति। ननु वेदाध्ययनस्यार्थज्ञानार्थत्वं लोकत एव प्राप्तमिति तत्र विधिवैयर्थ्यात् स्वाध्यायोऽध्येतव्य इति विधिरदृष्टार्थतयैव वेदाध्ययनं विधत्त इति न वेदाध्ययनस्य दृष्टार्थत्वमित्युक्तमिति शङ्कायां मूलग्रन्थेष्वेव तद् व्यवस्थापितमित्याह—**स्वाध्याय** इति। अध्ययनविधौ अध्ययनविधिवाक्ये। तदध्ययनस्य स्वाध्यायाध्ययनस्य। **अर्थज्ञानेति**। अर्थज्ञानरूपो दृष्टार्थो यस्य तत्त्वेन। दृष्टार्थो दृष्टप्रयोजनम्। अर्थज्ञानरूपदृष्टं वस्तु अर्थः प्रयोजनं यस्य तत्त्वेनेति वा। व्यवस्थापनात् सिद्धान्तितत्वात्।

एवमथातःपदयोरर्थमुक्त्वा धर्मजिज्ञासापदविग्रहप्रदर्शनपुरस्सरं धर्मपदं विवृण्वन्नेव सूत्रवाक्यार्थं दर्शयति—**तथा चेति**। अथातःपदयोरुक्तार्थकत्वे सतीत्यर्थः। क्रियापदं पूरयति—**कर्तव्येति**। जिज्ञासापदस्य विवक्षितमर्थं वदन् तत्र शक्त्यभावाद् वृत्त्यन्तरमाह—**जिज्ञासापदस्येति**। विचारः पूर्वोत्तरपक्षयुक्त्यनुसन्धानम्। लक्षणा बोध्यसम्बन्धः। जिज्ञासापदस्य शक्त्या ज्ञानेच्छाऽर्थः। तत्प्रयोज्यत्वं विचारस्य सम्बन्धः। धर्मं ज्ञातुमिच्छया हि विचारः क्रियत इति। ननु किमर्थं धर्मविचारः कर्तव्य इति प्रथमं जैमिनिः सूत्रयति। शास्त्रमेव कस्मान्नारभते। न च धर्मोऽस्य शास्त्रस्य विषयस्तज्ज्ञानं प्रयोजनमिति विषयप्रयोजनाभिधानाय तथा सूत्रितमिति वाच्यम्। चोदनालक्षणोऽर्थो धर्म इत्युपक्रम्यमाणस्य शास्त्रस्य स्वरूपपर्यालोचनादेव तदुभयप्रतीतिसिद्धेः सङ्कोचदत्तदृष्टेः सूत्रकारस्य तदर्थं पृथक्सूत्रकरणप्रवृत्त्यसम्भवादिति शङ्कायाम्, अर्थाद् विषयप्रयोजने प्रतिपादयतोऽस्य सूत्रस्य पूर्वपक्षविशेषनिरसने तात्पर्यमिति सूचयन्नभिमतं सिद्धान्तमाह—**अत** इति। वेदाध्ययनस्य दृष्टार्थतया विचारस्य कर्तव्यत्वादित्यर्थः। विचारशास्त्रमिदमारम्भणीयमिति सिद्धान्त-

कथनाद्विचारशास्त्रमनारम्भणीयमिति पूर्वपक्षः सोऽनुपपन्न इति तन्निरासश्च फलितः। इयमत्राधिकरणरचना। चोदनालक्षणोऽर्थो धर्म इति सूत्रोपक्रममिदं विचारशास्त्रं विषयः। तदारम्भणीयं न वेति संशयः। अध्ययनविधिनाऽध्ययनस्यादृष्टार्थतया विहितत्वेनार्थज्ञानस्यासम्पादनीयत्वात् तदर्थं विचारस्याकर्तव्यत्वात् तद्विचारपरमिदं शास्त्रमनारम्भणीयमिति पूर्वः पक्षः। दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वादध्ययनं दृष्टार्थतया विहितमिति व्यवस्थापितत्वादर्थज्ञानस्यावश्यसम्पादनीयत्वात् तदर्थं विचारस्य कर्तव्यत्वात् तदिदं शास्त्रमारम्भणीयमिति सिद्धान्त.। एवं शास्त्रारम्भसमर्थनपरमहाधिकरणप्रवर्तकतया महाफलमिदं सूत्रमिति नात्र मन्दफलत्वशङ्का युक्तेति ग्रन्थकारहृदयम्। तदिदमभिप्रेत्य सूत्रार्थं निगमयति—**इति शास्त्रारम्भसूत्रार्थं इति।** शास्त्रारम्भे स्थितं सूत्रं शास्त्रारम्भसमर्थनपरं सूत्रमिति वा।

**॥ इत्युपोद्घातपरिच्छेदः प्रथमः ॥**



## ॥ अथ लक्षणपरिच्छेदः ॥

**अथ को धर्मः किं तस्य लक्षणमिति चेत्, उच्यते । यागादिरेव धर्मः । तल्लक्षणं वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इति । प्रयोजनेऽतिव्याप्तिवारणाय प्रयोजनवदिति । भोजनादावतिव्याप्तिवारणाय वेदप्रतिपाद्य इति । अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणाय अर्थ इति ।**

---

एवं द्वादशलक्षण्या अनारम्भणीयत्वे तदर्थसङ्ग्राहकस्य स्वग्रन्थस्याप्यनारम्भणीयत्वं स्यादिति तदारम्भणीयत्वसमर्थनपरं प्रथमसूत्रं व्याख्यातम्। अथ द्वितीयसूत्रप्रतिपाद्यं धर्मविवेकायेति निर्दिष्टस्य विषयस्य धर्मस्य स्वरूपं लक्षणं च प्रतिपादयितुं प्रश्नं करोति—**अथ क इति ।** अथेति विषयान्तरप्रस्तावार्थः । को धर्म इति धर्मस्वरूपप्रश्नः । को धर्म इत्यस्योत्तरं यागादिरेव धर्म इति । यागादिः यागदानहोमादिः । एवकारेण चैत्यवन्दनादेर्वैशेषिकसम्मतस्यादृष्टमात्रस्य च व्यवच्छेदः । **प्रयोजनवदिति ।** प्रयोजनवांश्चासावर्थश्चेति विग्रहः । वेदप्रतिपाद्यत्वे सति प्रयोजनवत्त्वे सत्यर्थत्वं धर्मलक्षणम् । प्रयोजनवत्त्वमिष्टसाधनत्वम् । अर्थत्वमनर्थभिन्नत्वम् । तेनार्थशब्देनापीष्टसाधनत्वस्यैवोक्तत्वात् प्रयोजनवत्त्वमित्यनेन पौनरुक्त्यमिति परिहृतम् । लक्ष्ये लक्षणसङ्गमनमुपरिष्टात् करिष्यति । दलप्रयोजनान्याह—**प्रयोजन** इति । स्वर्ग इत्यर्थः । वेदप्रतिपाद्यत्वे सत्यर्थत्वस्य तत्र विद्यमानत्वादतिव्याप्तिः । प्रयोजनवत्त्वस्य निवेशे स्वर्गस्य चरमप्रयोजनत्वेन प्रयोजनान्तररहितत्वात् तद्वारणम् । **भोजनादाविति ।** आदिना कृषिवाणिज्यादि गृह्यते । प्रयोजनवत्त्वे सत्यर्थत्वस्य भोजनादौ सत्त्वादतिव्याप्तिः । वेदप्रतिपाद्यत्वनिवेशे लोकसिद्धस्य तस्य वेदप्रतिपाद्यत्वाभावान्नातिव्याप्तिः । ननु "एवमेवैतान्क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्नमत्ति" इति भोजनस्यापि वेदप्रतिपाद्यत्वमस्त्येवेति चेत्, न, प्रयोजनवत्त्वेन वेदप्रतिपाद्यत्वे सत्यर्थत्वं धर्मलक्षणमिति विवक्षितत्वात् । क्षुन्निवारणरूपप्रयोजनवत्तया लोकतोऽवगतस्य भोजनस्य, स्वर्गकामो यजेतेति स्वर्गप्रयोजनवत्तया यागस्येव, क्षुन्निवृत्तिकामो भुञ्जीतेति वेदप्रतिपाद्यत्वाभावात् । अर्थपदप्रयोजनमाह—**श्येनादाविति ।** नन्वर्थभिन्नत्वनिवेशेन कथं श्येनादिव्यावृत्तिः । अनर्थ इत्यस्य ह्यनिष्टमित्यर्थः । न हि श्येनयागः स्वरूपेण इष्टं वाऽनिष्टं वा भवति । तेनानर्थभिन्न एव श्येन इति नातिव्याप्तिपरिहार इति शङ्कायां फलद्वाराऽनिष्टभिन्नत्वमेव लक्षणे विवक्षितमित्यनिष्टनरकप्रयोजकतया फलद्वाराऽनिष्टस्य श्येनस्य नानिष्टभिन्नत्वमिति समाधातव्यमित्यभिप्रेत्याह—**अनर्थफल-**

**न च चोदनालक्षणोऽर्थो धर्म इति सौत्रतल्लक्षणविरोधः। चोदनापदस्य विधिरूपवेदैकदेशपरत्वादिति वाच्यम्, तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात्। वेदस्य सर्वस्य धर्मतात्पर्यवत्त्वेन धर्मप्रतिपादकत्वात्।**

---

**कत्वादनर्थभूत** इति। तथा च प्रयोजनवत्त्वेन वेदप्रतिपाद्यत्वे सति बलवदनिष्टाननुबन्धित्वं धर्मलक्षणमिति पर्यवसितम्।

उक्तमर्थमाक्षेपपरिहाररूपेण सूत्रारूढं करोति—**न चेति। सौत्रेति।** सूत्रेणोक्तं सौत्रम्। तस्य धर्मस्य लक्षणम्। सौत्रं च तत् तल्लक्षणं च। तेन तस्य वा विरोधः सौत्रतल्लक्षणविरोधः। विरोधमुपपादयति—**चोदनापदस्येति। विधीति।** विधिरूपश्चासौ वेदैकदेशश्च तत्परत्वात् तद्वाचित्वात्। चोदना विधिः लक्षणं प्रमाणं यस्य स चोदनालक्षण इति विधिप्रमाणकत्वरूपं विधिप्रतिपाद्यत्वं धर्मलक्षणमिति सूत्रात् प्रतीयते। अत्र तु वेदप्रतिपाद्यत्वमुक्तमिति विरोध इति भावः। सूत्रेऽपि वेदप्रतिपाद्यत्वमेवाभिसंहितमिति नास्ति विरोध इति परिहरति—**तत्रापीति।** वेदमात्रपरत्वात् कृत्स्नवेदप्रतिपादकत्वात्। न तु वेदैकदेशपरत्वमिति। नन्वबद्धं कृत्वा कुचोद्यं करोतीति न्यायेन किमर्थं स्वयमन्यथा लक्षणमुक्त्वा सौत्रपदं विनाश्यते। तदनुरोधेन विधिप्रतिपाद्यत्वमेव लक्षणं भवता कस्मान्नोच्यत इति शङ्कायां 'वेदोऽखिलो धर्ममूलम्' इत्यादिप्रमाणानुसारेण अर्थवादेभ्यो मन्त्रेभ्यश्च धर्मप्रमितेरिष्टत्वाद् विधिप्रतिपाद्यत्वमात्रस्य लक्षणघटकत्वे मन्त्रार्थवादप्रतिपाद्यधर्मेष्वव्याप्तिस्स्यादिति तत्परिहाराय वेदप्रतिपाद्यत्वस्य लक्षणेऽवश्यनिवेश्यत्वात् सौत्रपदस्यान्यथानयनमपरिहार्यमिति समाधानमभिप्रेत्याह—**वेदस्य सर्वस्येति।** ननु विधेयप्राशस्त्याद्यन्यपरतया शक्यार्थतात्पर्यविरहाद् धर्मविशेषप्रतिपादकतया प्रतीयमानस्याप्यर्थवादादेर्वस्तुतो न धर्मप्रतिपादकत्वं सम्भवतीत्याशङ्क्योक्तम्—**धर्मतात्पर्यवत्त्वेनेति।** अयं भावः—न सर्वत्रार्थवादानां शक्यार्थे तात्पर्यविरहः। रात्रिसत्रे ह्यर्थवादप्रतिपाद्यमेव फलमाश्रितम्। विधिना फलस्याकाङ्क्षितत्वात् सन्निहितस्यार्थवादस्य स्तुतिपरस्यापि फलेऽपि तात्पर्यस्यावगमात्। तथा 'धन्वन्निव प्रपा असि' इत्यादीनां देवतास्तुत्यर्थतयाऽन्यपराणामपि प्रपाकल्पनादिधर्मे तात्पर्यमवगम्यते। एवं तात्पर्यविगमे सत्यन्यपराणां स्वार्थतात्पर्यं न भवतीति निर्बन्धो न कर्तव्यः। यदाहुः—

**"गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्।**
**वेदोऽयमभ्यधयत्यर्थं को नु तं प्रतिकूलयेत्"** ॥ इति।

अत्रेदं भाति—न सूत्रपदमन्यथा नेयम्। तदनुरोधेन तु विधिप्रतिपाद्यत्वमेव लक्षणे घटनीयम्। न चार्थवादादिप्रतिपाद्येषु धर्मेष्वव्याप्तिः। अर्थवादादिभ्यश्चोदनात इव साक्षाद्धर्मस्याप्रमितेस्तेभ्यो विधिं कल्पयित्वा तत एव धर्मस्य प्रमीयमाणत्वेन तेषामपि विधिप्रतिपाद्यत्वस्याक्षतत्वादिति।

**स च यागादिः यजेत स्वर्गकाम इत्यादिवाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते। तथा हि। यजेतेत्यत्रास्त्यंशद्वयं यजिधातुः प्रत्ययश्च। प्रत्ययेऽप्यस्त्यंशद्वयम्—आख्यातत्वं लिङ्त्वं च तत्राख्यातत्वं दशलकारसाधारणम्। लिङ्त्वं पुनर्लिङ्मात्रे।**

---

इदानीं प्रयोजनवत्त्वेन वेदबोध्यत्वं धर्मे सङ्क्रमयितुमारभते—**स चेति**। स यागादिरेव धर्म इत्युक्तलक्षणलक्ष्यतया पूर्वमुक्तः। स च यागादिरिति लक्ष्यमुक्तम्। प्रयोजनवत्त्वेन वेदप्रतिपाद्यत्वमित्यत्र वेदस्योक्तिः—**यजेत स्वर्गकाम इति वाक्येनेति**। प्रयोजनवत्त्वेन प्रतिपाद्यत्वमुक्तम्—**स्वर्गमुद्दिश्य विधीयत इति**। विधीयते कर्तव्यत्वेन ज्ञाप्यते। ननु स्वर्गमुद्दिश्य विधीयत इत्यत्र स्वर्गमुद्दिश्येति किं स्वर्गकामपदस्यार्थः, उत स्वर्गमित्यध्याहृतपदान्तरस्यार्थः। नाद्यः, बहुव्रीहिसमासत्वेन भावनायां कर्तृत्वेनान्वीयमानस्वर्गविषयककामनावत्पुरुषवाचकस्य स्वर्गकामपदस्य स्वर्गमात्रवाचित्वानुपपत्तेः। न द्वितीयः, स्वर्गकामपदस्य वैयर्थ्यापत्तेरित्याशङ्कायां स्वर्गमिति पदान्तरमध्याह्रियते। स्वर्गकामपदस्य तु अधिकारिसमर्पकत्वेन न वैयर्थ्यमिति परिहारमभिप्रेत्योक्तम्—**पुरुषं प्रतीति**। पुरुषमुद्दिश्येत्यर्थः। पुरुषस्य फलभोक्तृत्वतात्पर्येणेति यावत्। न च स्वर्गमुद्दिश्य पुरुषमुद्दिश्येत्यनेकोद्देश्यत्वं वाक्यस्य विरुद्धमिति शङ्क्यम्। सजातीयानेकोद्देश्यत्वस्यैव एकस्मिन् वाक्ये विरोधात्। निमित्तफलादिविजातीयानेकोद्देश्यत्वे विरोधाभावात्। अत्र च फलभोक्तृत्वेन पुरुषस्य साध्यत्वेन स्वर्गस्योद्देश्यत्वेन सजातीयानेकोद्देश्यत्वाभावात्। किञ्च नात्र स्वर्गकामोद्देश्यका स्वर्गोद्देश्यका भावनेति बोधः, येनानेकोद्देश्यकत्वमाशङ्क्येत; किन्तु स्वर्गकामनावत्पुरुषवृत्तिधर्मफलसमानाधिकरणं यत्कर्तृत्वं तन्निरूपिका स्वर्गोद्देश्यका भावना विधिविषय इति बोधः। स्वर्गकाम इति प्रथमार्थकर्तृत्वस्य यजेतेत्यात्मनेपदवशाद् यागजन्यफलसमानाधिकरणत्वप्रतीत्या पुरुषस्य फलसमानाधिकरणकर्तृत्वरूपाधिकारसिद्धौ तात्पर्यगत्या तस्य फलापेक्षयाऽप्युद्देश्यत्वं सिद्ध्यतीति न वाक्यस्यानेकोद्देश्यत्वमिति।

**अन्यूनानतिरिक्तार्थं विशदं हृदयङ्गमम्।**
**लिखितुं शास्त्रसन्दर्भं कः सम्प्रति महीतले॥**

उदाहृतस्य वाक्यस्य विधायकत्वप्रकारं प्रदर्शयति—**तथा हीति। यजेतेति।** अत्रांशो भागः। **प्रत्ययेऽपीति**। अत्रांशो धर्मः। नन्वेकप्रत्ययवृत्तित्वे कथमाख्यातत्वलिङ्त्वयोर्भेदः। न हि घटत्वकलशत्वे परस्परं भिन्ने इत्यत्राह—**तत्रेति**। आख्यातत्वलिङ्त्वयोरित्यर्थः। दशलकारसाधारणम्। दशानां लकाराणां समाहारो दशलकारम्। तद्वृत्तीत्यर्थः। **लिङ्मात्र इति**। वर्तत इति शेषः। तथा च व्याप्यव्यापकभूतयोर्लिङ्त्वाख्यातत्वयोर्घटत्वपृथिवीत्वयोरिव भेद आवश्यक इति भावः।

**उभाभ्यामप्यंशाभ्यां भावनैवोच्यते । भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः । सा द्विधा—शाब्दी भावना, आर्थी भावना चेति । तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्व्यापारविशेषः शाब्दी भावना । सा च लिङ्त्वांशेनोच्यते । लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः । यद्यस्माच्छब्दान्नियमतः प्रतीयते, तत्तस्य वाच्यम् । यथा गामानयेत्यस्मिन् वाक्ये गोशब्दस्य गोत्वम् ।**

---

एवं वाचकरूपं दर्शितम् । सम्प्रति वाच्यमाह—**उभाभ्यामिति ।** रूपद्वयमपि पुरस्कृत्य लिङ्प्रत्ययो भावनामेव बोधयतीत्यर्थः । एवकारेण कर्तृव्यवच्छेदः । यद्यपि तत्र लिङ्त्वांशेन शब्दभावना, आख्यातत्वांशेनार्थभावना चोच्यत इति विभज्य वक्तुं युक्तम्, तथापि भावनासामान्यस्य लक्षणं वक्तुमेवं सामान्येनोक्तिरिति ज्ञेयम् । भावनासामान्यलक्षणमाह—**भावना नामेति ।** भवितुः उत्पद्यमानस्य । अस्य भवनेऽन्वयः । भवनानुकूलः उत्पत्त्यनुकूलः । भावयितुः उत्पादकस्य । व्यापारविशेषः, न शारीरचेष्टारूपः ; किन्तु तदतिरिक्त आत्मगतप्रयत्नरूपः । ननु एकस्या भावनायाः प्रतिपादनाय किमिति प्रत्ययः धर्मद्वयमपेक्षते । न खलु क्वचिदेकस्यार्थस्य वाचकतावच्छेदकद्वयं दृष्टम्, इत्याशङ्कायां नात्र एकामेव भावनां धर्मद्वयविशिष्टः प्रत्ययः प्रतिपादयति ; किन्तु एकेन धर्मेण एकां भावनाम्, अन्येन धर्मेणान्याञ्चेति समाधानाभिप्रायेण भावनां विभजते—**सेति ।** विभागवाक्यशाब्दबोधप्रकारोऽक्षरार्थे द्रष्टव्यः । शब्दस्येयं शाब्दी । शाब्दीं लक्षयति—**तत्रेति ।** द्वयोर्मध्य इत्यर्थः । अनुकूलः प्रयोजकः । भावयितुः प्रेषयितुः लिङादेः । व्यापारविशेषः बाह्यक्रियाविलक्षण आन्तरप्रयत्नविलक्षणश्च सविषयको व्यापारः । प्रवर्तनैव शाब्दी भावनेत्युक्तं भवति ।

उक्तप्रत्ययवृत्त्यंशद्वये अस्या भावनाया वाचकतावच्छेदकमंशं दर्शयति—**सा चेति ।** लिङंशेनेत्यपपाठः । लिङ्त्वांशेनेति लक्षणे तृतीया न कर्तरि । प्रत्ययेनेत्यध्याहर्तव्यम् । लिङ्त्वांशेन विशिष्टो यः प्रत्ययस्तेनोच्यत इत्यर्थः । एवं यजेतेत्यत्र शाब्दी भावना लिङ्त्वावच्छिन्नप्रत्ययवाच्येति प्रतिज्ञानिर्देशः कृतः । हेतुं निर्दिशति—**लिङ्श्रवण इति ।** लिङ्त्वधर्मावच्छिन्नप्रत्ययश्रवणे सतीत्यर्थः । अस्य **नियमेन प्रतीतेरित्यत्रान्वयः ।** नियमेन सर्वदा । अव्यभिचारेणेत्यर्थः । प्रतीतेः प्रतीयमानत्वात् । लिङ्त्वेन रूपेण प्रत्यये श्रुते नियमेन शब्दभावनायाः प्रतीयमानत्वात् शाब्दी भावना लिङ्त्वावच्छिन्नवाच्येत्युक्तं भवति । शब्दभावनारूपे पक्षे नियमेन प्रतीयमानत्वरूपस्य हेतोस्सद्भावं प्रदर्शयितुं तां प्रतीतिमभिलपति—**अयं मां प्रवर्तयतीति ।** अयमाचार्यः । मां शिष्यम् । नन्वस्यां प्रतीतौ न शब्दभावनाया विषयत्वमस्तीत्या-

**स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः। वैदिकवाक्ये तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। अत एव शाब्दी भावनेति व्यवह्रियते।**

---

शङ्कायाम् अस्तीति प्रदर्शयितुं पुनरयं मां प्रवर्तयतीत्येतद्विवृणोति—**यदिति**। पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषो हि शाब्दी भावनेत्युक्तम्। अयं मां प्रवर्तयतीत्यस्य मत्प्रवृत्त्यनुकूलव्यापारवानयमित्यर्थः। एवं चायं मां प्रवर्तयतीति प्रतीतेर्मत्प्रवृत्त्यनुकूलव्यापारवानयमित्येवंरूपत्वे मच्छब्दवाच्यशिष्यरूपपुरुषप्रवृत्त्यनुकूलव्यापारस्य तत्र भानसिद्धेस्तादृशव्यापाररूपायाश्शब्दभावनायास्तत्र विषयत्वे कः सन्देह इति भावः। एवं प्रतिज्ञोक्ता हेतुश्च। अत उदाहरणमाह—**यदिति**। जातिवाचिनां शब्दानां नैयायिकमत इव नास्मन्मते जात्यवच्छिन्नव्यक्तिवाचित्वम्; अपि तु जातिमात्रवाचित्वम्। व्यक्तेस्तु आक्षेपतो लाभ इत्यभिप्रायेणोक्तम्—**गोशब्दस्य गोत्वमिति**। अत्रेदं बोध्यम्—परार्थानुमानेऽस्मन्मते त्रय एवावयवा अभ्युपगम्यन्ते। न नैयायिकमत इव पञ्च। तदुक्तम्—

**तत्तु पञ्चतयं केचिद्द्वयमन्ये वयं त्रयम्।**
**उदाहरणपर्यन्तं यद्वोदाहरणादिकम्॥** इति।

तस्मादत्र उदाहरणपर्यन्तस्यावयवत्रयस्यैवाभिधानं नोपनयनिगमनयोरपीति।

**प्रदर्श्यमानं सारस्यं गृह्णाति यदि सज्जनः।**
**ग्रन्थकारस्य लोकेऽस्मिन् सा हि सम्भावना परा॥**

ननु यदि प्रवर्तनेत्यभिधीयमान उक्तविधव्यापार एव शाब्दी भावना, तर्हि लौकिकप्रवर्तनायाः शब्दभावनेति व्यवहारं कस्मान्न कुर्वन्ति। न हि कदाचित् लौकिकेषु गामानयेत्यादिवाक्येषु लिङः प्रवर्तना अर्थ इतिवत् शब्दभावना अर्थ इति कश्चिद्व्यवहरतीत्याशङ्क्य लौकिकप्रवर्तनामपेक्ष्य वैदिकप्रवर्तनाया अस्ति विशेषः, येनेयं केवलं शाब्दी भावनेति व्यवहारं भजते न लौकिकप्रवर्तनापीति प्रदर्शयन् प्रथमं लौकिकप्रवर्तनास्वरूपमाह—**स चेति**। पुरुषप्रवृत्त्यनुकूलः लिङ्त्वांशेनाभिधीयमानश्चेत्यर्थः। **लौकिकवाक्य इति**। प्रतीत इति शेषः। लोके भवं लौकिकं पौरुषेयमित्यर्थः। **पुरुषनिष्ठ इति**। तादृशवाक्यप्रयोक्तृपुरुषवृत्तिरित्यर्थः। अभिप्राय इच्छा, तस्य विशेषः, अयमत्र प्रवर्ततामित्येवंरूपः। अथ वैदिकप्रवर्तनाया विशेषमाह—**वैदिकवाक्ये त्विति**। वैदिकवाक्ये प्रतीतस्त्वित्यर्थः। तुकारः लौकिकवाक्यप्रतीतव्यापारापेक्षया वैलक्षण्यं द्योतयति। **पुरुषेति**। वैदिकवाक्यवक्तृपुरुषेत्यर्थः। स व्यापारविशेष इत्यनुषञ्जनीयम्। **लिङादीति**। आदिना समिधो यजतीत्यादिर्लेट् स्वाध्यायोऽध्येतव्य इत्यादिस्तव्यप्रत्ययश्च गृह्यते। एवं लौकिकवाक्यप्रतीतव्यापारविशेषः पुरुषनिष्ठः, वैदिकवाक्य-

**सा च भावनांऽशत्रयमपेक्षते । साध्यं साधनमितिकर्तव्यताञ्च । किं भावयेत् ? केन भावयेत् ? कथं भावयेदिति ? तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थी भावना साध्यत्वेनान्वेति । एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः ।**

---

प्रतीतस्तु शब्दनिष्ठ इत्येकं वैलक्षण्यं प्रकृतोपयोगितया कण्ठरवेणोक्तम् । अनेन वैलक्षण्यान्तरमप्यार्क्षिप्तं वेदितव्यम् । लौकिकवाक्ये हि स व्यापारविशेषः, अयमत्र प्रवर्ततामित्येवंरूपेच्छा इत्युक्तम् । वैदिकवाक्ये न तथा भवितुमर्हति । ज्ञानसमानाधिकरणाया इच्छाया आत्ममात्रवृत्तित्वादनात्मनि लिङादिशब्दे वृत्त्यसम्भवेन लिङादिवृत्तिव्यापारविशेषस्य अयमत्र प्रवर्ततामितीदृशाकारवत्त्वेनेच्छासदृशत्वेऽपि इच्छात्मकत्वस्य दुर्वचत्वात् । तथा च लौकिकवाक्यप्रतीतस्स व्यापारविशेष इच्छाविशेषरूपः । वैदिकवाक्यप्रमितस्तु न तद्रूपः; किन्तु तत्सदृश इति वैलक्षण्यान्तरमिति । एवकारो वैदिकवाक्यस्यापि पौरुषेयत्वशङ्काप्रयुक्तां तत्राप्युक्तव्यापारविशेषस्य पुरुषनिष्ठत्वशङ्कां व्यावर्तयति । अनेन शब्दनिष्ठत्वविशेषेण वैदिकप्रवर्तनायाः शाब्दी भावनेति व्यवहारः, न प्रेरकपुरुषनिष्ठाया लौकिकप्रवर्तनाया इत्याह—**अत एवेति** । लिङादिशब्दनिष्ठत्वादेवेत्यर्थः । वैदिकवाक्य इति स व्यापारविशेष इति चात्रानुषज्य योज्यम् ।

एवं यजेतेत्यत्र प्रत्ययेन लिङ्त्वांशेनाभिधीयमानायाः शब्दभावनायाः स्वरूपं विविच्य दर्शयित्वाऽथ तस्याः पदार्थान्तरैरन्वयं दर्शयन् प्रथमं तस्याः पदार्थान्तराकाङ्क्षाऽस्तीत्याह—**सा चेति** । अत्र सर्वत्र चकारः पूर्ववाक्योक्तार्थसमुच्चयार्थ इति ज्ञेयम् । साध्यं साधनमिति द्वितीया विभक्तिः । साध्यमपेक्षते, साधनमपेक्षते, इतिकर्तव्यताञ्चापेक्षत इत्थमंशत्रयमपेक्षत इत्यर्थः । अंशत्रयमेवापेक्षत इत्यत्र अंशत्रयमपेक्षत एवेत्यत्र च भावनास्वभावो हेतुः । **तत्रेति** । अंशत्रय इत्यर्थः । अपेक्षते आकाङ्क्षति । साध्याकाङ्क्षामभिलपति—**किमिति** । साधनाकाङ्क्षामभिलपति—**केनेति** । चरमाकाङ्क्षामभिलपति—**कथमिति** । ननु का आर्थी भावनेति मध्ये शिष्यस्य प्रश्नौत्सुक्यं शमयन्नाह—**वक्ष्यमाणेति** । इदं पृथक्पदं भावनाविशेषणम् । ननु प्रत्ययवाच्यशब्दभावनायाः साध्याकाङ्क्षायां प्रकृत्युपात्तो यागः कस्मान्नान्वेतीत्यत्राह—**एकेति** ।

अयं भावः—स्ववाचकावयवघटितपदघटकावयवान्तरवाच्यत्वाद्यागस्य तदुपस्थितौ पदश्रुतिः प्रमाणं भवति । तदपेक्षया च स्ववाचकवाच्यत्वरूपा समानाभिधानश्रुतिः शीघ्रतरोपस्थितिजनकत्वात् प्रवला । इयञ्चार्थभावनोपस्थितौ प्रमाणमिति प्रवलप्रमाणोपस्थिताया अर्थभावनाया एव भाव्यत्वं नान्यस्येति । अभिधीयतेऽर्थोऽनेनेति अभिधानं वाचकःशब्दः । समानञ्च तदभिधानञ्च । तद्रूपा श्रुतिः । ननु कथमर्थभावनायां समानाभिधानश्रुतिरित्यत्रोक्तम्—**एकप्रत्ययगम्यत्वेनेति** । एकः समानः । साध्याकाङ्क्षिणी या शब्दभावना तद्वाचकेनैव तप्रत्ययेन गम्यमानत्वेन अभिधीयमानत्वेनेत्यर्थः ।

**सङ्ख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः ।**

**साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति । तस्य च करणत्वं न भावनोत्पादकत्वेन । तत्पूर्वमपि तस्याः शब्दे सत्त्वात् ; किन्तु शब्दभावनाभाव्यनिर्वर्तकत्वेन । इतिकर्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यज्ञानमितिकर्तव्यतात्वेनान्वेति ।**

---

सङ्ख्यादिष्वपि समानाभिधानश्रुतेः साम्यात् कथं तेषां साध्यत्वेन नान्वय इत्याशङ्क्य परिहरति—**सङ्ख्यादीनामिति** । आदिना फलगतकर्त्रभिप्रायत्वादेर्ग्रहणम्, न कालस्य, विधिप्रत्ययस्य कालवाचित्वाभावात् । लडादिषु कालवाचिषु शब्दभावनाया अप्रसक्तेश्च । **अयोग्यत्वादिति** । भाव्यत्वेनान्वेतुं योग्यताविरहादित्यर्थः । प्रागसिद्धं हि भाव्यत्वेनान्वेति । यजेतेत्यत्र एकवचनोपात्ता कर्तृगतैकत्वसङ्ख्या तु प्रागेव सिद्धेति न तस्या भाव्यत्वेनान्वेतुं योग्यतेति ।

साध्यमुक्तम् । साधनमाह—**साधनेति** । साधनाकाङ्क्षायां साधनत्वेनान्वेतीति वक्तव्ये करणत्वेनान्वेतीत्युक्तिः साधनमिति करणं विवक्षितमिति विवरणाय । एवं लिङादिज्ञानस्य करणत्वेनान्वये लिङादिज्ञाननिष्ठकरणत्वनिरूपिका शब्दभावनेति बोधो भवति । करणत्वनिरूपकत्वं च कार्यस्यैव । तथा च यथा दण्डनिष्ठकरणत्वनिरूपको घट इत्युक्ते दण्डोत्पाद्यो घटः, घटोत्पादको दण्ड इति प्रतीयते, तथा लिङादिनिष्ठकरणत्वनिरूपिका शाब्दी भावनेत्युक्ते लिङादिज्ञानोत्पाद्या शब्दभावना तदुत्पादकं लिङादिज्ञानमिति प्रतीयते । ननु तथा प्रत्येतव्यमित्यभिप्रेत्याह—**तस्य चेति** । लिङादिज्ञानस्य चेत्यर्थः । **भावनेति** । शब्दभावनेत्यर्थः । तत्र हेतुमाह—**तत्पूर्वमपीति** । तस्मात् लिङादिज्ञानात्पूर्वं तत्पूर्वम् । न केवलं लिङादिज्ञानादनन्तरम्; अपि तु ततः प्रागपीत्यर्थः । तस्याः शब्दभावनायाः । शब्दे यजेतेत्यादौ लिङ्प्रत्यये सत्त्वात् वर्तमानत्वात् । नित्यत्वादिति समुदायार्थः । ज्योतिष्टोमेन यजेत स्वर्गकाम इत्यादौ लिङ्प्रत्ययस्तावदपौरुषेयवाक्यघटकत्वान्नित्यः । तद्वृत्तिश्च शब्दभावनारूपो व्यापारोऽनेक इत्यत्र प्रमाणाभावादेक इति गम्यते । एकस्य च कालभेदेन बहुभिश्च प्रतीयमानस्य शब्दाकाशादिवन्नित्यत्वमवर्जनीयम् । एवं तस्य नित्यत्वेऽनुत्पाद्यत्वात् तदुत्पादकत्वं लिङादिज्ञानस्य न सम्भवतीति । एवं लिङादिशब्दनित्यत्वेनोपपादनीयं तद्व्यापारनित्यत्वमभिसन्धायैव शब्दे सत्त्वादिति शब्दपदमधिकमुपात्तमिति बोध्यम् । किञ्च, घटोऽस्तीत्यादौ पदज्ञानं सर्वत्र पदार्थज्ञापकमेव दृष्टम् । न क्वचिदुत्पादकमिति लिङादिज्ञानमत्र लिङादिवाच्यशब्दभावनाया ज्ञापकमेव भवितुमर्हति नोत्पादकमित्यपि द्रष्टव्यम् । कथं तर्हि शब्दभावनाकरणत्वं लिङादिज्ञानस्येत्यत्राह—**किन्त्विति** । **शब्देति** । शब्दभावनाया भाव्यं भाव्यत्वेनान्विताऽर्थभावना तस्या निर्वर्तकत्वेन

**प्रयोजनेच्छाजनितक्रियाविशेषो व्यापार आर्थी भावना। सा चाख्यातत्वांशेनोच्यते। आख्यातसामान्यस्य व्यापारवाचित्वात्। साऽप्यंश-त्रयमपेक्षते। साध्यं साधनमितिकर्तव्यतां च। किं भावयेत् केन भावयेत् कथं भावयेदिति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वे-नान्वेति। साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति। इतिकर्तव्यता-काङ्क्षायां प्रयाजाद्यङ्गमितिकर्तव्यतात्वेनान्वेति।**

---

जनकत्वेन। तथा च शब्दभावनाकरणत्वमिति न साक्षाच्छब्दभावनानिरूपितं करणत्वं विवक्षितम्; किन्तु शब्दभावनाभाव्यार्थभावनानिरूपितं करणत्वमेवेति भावः। अत्र 'किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा' इति पाठो दृश्यते। स चिन्त्यार्थः। अथ शब्दभावनाया इतिकर्तव्यतामाह—**इतीति**। **अर्थवादेति**। अर्थवाद-जन्यं प्राशस्त्यज्ञानमित्यत्र तात्पर्यम्। इतिकर्तव्यताशब्दार्थः प्राशस्त्यज्ञानस्य लिङादि-ज्ञानेतिकर्तव्यतात्वञ्च परिष्काराक्षरार्थयोर्द्रष्टव्यम्।

एवं शब्दभावना निरूपिता। अथ अर्थभावनां निरूपयन् प्रथमं लक्षणमाह—**प्रयोजनेति**। प्रयोजनस्य प्रयोजने वा इच्छा प्रयोजनेच्छा प्रयोजनविषयिणीच्छेत्यर्थः। प्रयोजनमिष्टं स्वर्गादि अनिष्टपरिहारो वा तया जनितः क्रिया धात्वर्थभूतयागादि-र्विषयो यस्य स चासौ व्यापारश्चेति। प्रयत्न एवार्थी भावनेत्युक्तं भवति। स्वर्गा-दीच्छया हि यागादौ पुरुषस्य जायमानो व्यापारो यत्न एव। स्पष्टञ्चेदमापदेवीये—"स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः, स भावनेति"। अत्र मतभेदादि न किञ्चि-दिह प्रस्तुमः। एतद्भावनाद्वयस्वरूपनिष्कर्षकश्लोकावक्षरार्थे द्रष्टव्यौ। यजेतेत्यत्र प्रत्ययेऽस्त्यंशद्वयम्। तत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इत्युक्तम्। अद्यांशान्तरेण स प्रत्यय इमामर्थभावनामभिदधातीत्याह—**सा चेति**। अत्र हेतुमाह—**आख्यातेति**। आख्यातसामान्यस्य आख्यातत्वावच्छिन्नस्य सर्वस्य। आख्यातमिति व्यवह्रियमाणानां सर्वेषां लडादीनां लकाराणामित्यर्थः। व्यापारवाचित्वात् यत्नवाचित्वात्। सर्वेषामाख्यातानां यत्नवाचित्वाद् आख्यातत्वं यत्ननिरूपितशक्ततावच्छेदकं भवति। यजेतेत्यत्र तप्रत्ययस्यापि आख्यातत्वात् तेन रूपेण स प्रत्ययो यत्नरूपामर्थभावनामभिदधातीत्यर्थः। ननु कथं सर्वाण्याख्यातानि यत्नवाचीनि। उच्यते—पचति पाकं करोति, अपचत् पाकमकरोत्, पक्ष्यति पाकं करिष्यतीति आख्यातानां कृञ्धातूनां विवरणात् कृञर्थस्य कृतेर्यत्नरूपत्वादित्यन्यत्र विस्तरः। एवञ्चात्राप्याख्यातश्रवणे नियमेन प्रतीयमानत्वमेव हेतुरिति मन्तव्यम्। उक्तं ह्यापदेवेन—'यजेतेत्याख्यातश्रवणे यागेन यजेतेति प्रतीतेर्जायमानत्वादिति'। अस्या

**अथ को वेद इति चेत्, उच्यते, अपौरुषेयं वाक्यं वेदः ।**

---

भावनायाः पदार्थान्तरैरन्वयं प्रतिपादयितुमाह—**सापीति** । अन्यदत्र पूर्ववत् । स्वर्गादेः साध्यत्वं षष्ठाद्यन्यायेन यागादेः करणत्वं भावार्थाधिकरणन्यायेन प्रयाजादेरिति-कर्तव्यतात्वं च प्रकरणादिप्रमाणवशेनेति द्रष्टव्यम् । एवं स्वर्गभाव्यका यागविशेष-करणिका प्रयाजादीतिकर्तव्यताका च याऽर्थभावना, तद्भाव्यका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका च शाब्दी भावनेति पूर्वमुदाहृतस्य यजेत स्वर्गकाम इति वाक्यस्य बोधो वर्णितो भवति । प्रातिस्विकवाक्येषु शब्दभावनायाः कर्तव्यत्वेन प्रतीतिर्नास्तीति भावनाप्रकरणे परिभाषातद्व्याख्यानेषु सुनिरूपितम् । तथा प्रतीत्यभावे च शब्दभावनायामंशत्रयाकाङ्क्षानुदयात् तदवगाही बोधो नात्र भवितुमर्हति ; किन्तु अंशत्रयान्वितायामर्थभावनायां शब्दभावनायाः प्रयोज्यत्वसम्बन्धेनान्वयो भवति । अर्थभावनायामपि इतिकर्तव्यताकाङ्क्षायां प्रयाजादिवाचकस्यास्मिन्वाक्येऽभावाद् यत्किञ्चित्त्वेनैवेतिकर्तव्यता भासते । ततश्च स्वर्गभाव्यका यागकरणिका यत्किञ्चि-दितिकर्तव्यताकाऽर्थभावना विधिप्रयोज्या इति बोधनिष्कर्षः ।

ननु वेदप्रतिपाद्य इत्यत्र को वेदो नाम । यद्यप्येतावता निरूपणेन शब्दप्रमाण-विशेषस्स इति ज्ञायते । तथापि लौकिकशब्दात् तस्य को विशेषो येन तन्मात्रस्य धर्मे प्रामाण्यं न लौकिकस्येति जिज्ञासोः प्रश्नमनुवदन् समाधत्ते—**अथेति** । अपौरुषेयं पुरुषेणा-निर्मितम् । वाक्यमिति वाक्यराशिर्विवक्षितः । प्रतिवाक्यं वेदत्वाभावात् । अपौरुषे-यत्वं लोकाद्वेदस्य विशेषः । तस्मात् तन्मात्रं धर्मे प्रमाणम् । पौरुषेयत्वे हि पुरुषस्य भ्रमप्रमादविप्रलिप्साऽशक्तिदोषैर्वाचामप्रामाण्यं प्रसजतीति ।

**॥ इति लक्षणपरिच्छेदो द्वितीयः ॥**



## ॥ अथ विधिपरिच्छेदः ॥

**स च विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पञ्चविधः। तत्राज्ञातार्थज्ञापको वेदभागो विधिः। स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते। यथा—'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विधिर्मानान्तरेणाप्राप्तस्वर्गप्रयोजनवद्धोमं विधत्ते। अग्निहोत्रहोमेन स्वर्गं भावयेदिति वाक्यार्थबोधः। यत्र कर्म मानान्तरेण प्राप्तम् तत्र तदुद्देशेन गुणमात्रं विधत्ते। यथा दध्ना जुहोतीत्यत्र होमस्य अग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानं—दध्ना होमं भावयेदिति।**

---

एवं विषयप्रयोजनाभिधानाय प्रथमसूत्रार्थ उक्तः। विषयस्वरूपपरिज्ञानाय द्वितीयसूत्रोक्तं लक्षणमप्युक्तम्। अथ शास्त्रार्थसङ्ग्रहं करिष्यन् शास्त्रे वेदं विभज्य विचारस्य कृतत्वात् स्वयमपि तथा कर्तुं वेदं विभजते—**स चेति**। अपौरुषेयत्वाद्धर्मे प्रमाणभूत इत्यर्थः। **विधीति**। अत्रेदं चिन्त्यम्—अर्थवादस्य विधेरनन्तरमुद्देशः कर्तव्यः, नान्ते, सूत्रकारेण तथा विचारितत्वात्। नन्वेतद्ग्रन्थकारस्य परमोपजीव्येनापदेवेन तथा कृतत्वादनेनापि तथा कृतमिति चेत् किञ्चित् सावधानं श्रोतव्यम्। आपदेवस्तावद्धर्मलक्षणं लक्ष्ये सङ्गमयितुं यजेत स्वर्गकाम इति वाक्यस्यार्थं वक्तुं प्रवृत्तः, तत्र लिङभिहितशब्दभावनासम्बन्धिनीमितिकर्तव्यतां प्राशस्त्यज्ञानरूपामर्थवादो लक्षणया समर्पयतीत्युक्त्वा, कथं तस्य शक्यार्थपरित्यागेन लक्षणयाऽर्थान्तरं स्वीक्रियत इति शङ्कां स्वार्थे प्रयोजनाभावादर्थान्तरस्वीकार इति परिहृत्य, कामं प्रयोजनं माऽस्त्वितीष्टापत्ति, स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनं कर्तव्यमिति बोधयन् निरर्थकस्याध्ययनानुपपत्तेः सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचयतीति निरस्य, यदि सर्वो वेदः प्रयोजनवदर्थपर्यवसायी, तर्हि कः को वेदभागः कं कं प्रयोजनवदर्थं प्रतिपादयतीति प्रथममुच्यतां तदनन्तरमर्थवादस्यापि तथा प्रयोजनवदर्थपरत्वाय लक्षणामङ्गीकुर्म इति प्रत्यवस्थाने तत्समाधानाभिप्रायेण, प्रमाणाध्यायप्रथमपादनिरूपितो विधिः अर्थवादचिन्तानन्तरं द्वितीयपादान्ते चिन्तितो मन्त्रश्चतुर्थपादे प्रतिपाद्यं नामधेयम्, दशमान्त्ये विचारितो निषेध इत्येतेषां वेदभागानां प्रथमं प्रयोजनवदर्थपरत्वदर्शनाय क्रमेण प्रथमं निर्देशं कृत्वा, तदनन्तरं तद्वत्

प्रयोजनवदर्थपरत्वावश्यंभावप्रदर्शनायार्थवादस्य विधेरनन्तरं मन्त्रात् प्राग् निर्देष्टव्यस्याप्यन्ते निर्देशं चकार। एवमर्थवादस्य लक्षणयाऽपि प्रयोजनवदर्थसमर्थनाय विध्यादीनामन्येषां वेदभागानामपि प्रयोजनवदर्थपरत्वमस्तीति प्रदर्शयितुमेव **स च वेद** इत्याद्यापदेवग्रन्थारम्भ इति।

**तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान्।**
**मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकतयाऽर्थवत्त्वम्।**
**नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्।**
**निवृत्तिकरत्वेन निषेधानां पुरुषार्थानुबन्धित्वम्।**

इति तत्तत्प्रकरणोपक्रमवाक्यैः,

**तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानार्थक्यम्, एवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावात् लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम्।**

इत्युपसंहारवाक्येन च स्फुटमवगम्यते। तस्मादापदेवकृतोऽर्थवादस्यान्ते निर्देशः सर्वथोपपद्यते। एतद्ग्रन्थकारस्तु शब्दभावनाऽर्थभावनासम्बन्धिनं सर्वं विचार समाप्य विध्यादीनां वेदभागानां स्वातन्त्र्येण निरूपणतात्पर्येणैव **स चे**त्यादिना वेदभागान्निर्दिशतीति प्रादर्शयाम। तत्र मूलग्रन्थानुसारेणार्थवादानां विधिसन्निहितत्वात् तदेकवाक्यतापन्नत्वाच्च विध्यनन्तरमेव निर्देशे निरूपणे च कर्तव्ये चक्षुषी निमील्य परकीयनिर्देशानुसरणं कथञ्चिदप्युपपद्यत इति।

**श्वापदाक्रन्दबधिरे वने कूजसि पञ्चमम्।**
**पिक यद्वा न ते चिन्ता शृणोतु न च वा परः॥**

**पञ्चविध इति**। पञ्चभाग इत्यर्थः। विधिं लक्षयति—**तत्रेति**। अज्ञातस्य तदितरयावत्सजातीयविजातीयप्रमाणैरबोधितस्याऽर्थस्य बोधक इत्यर्थः। ननु 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्'॥ इति यत्किञ्चित्प्रमाणान्तरानवगतस्वर्गस्वरूपबोधकेऽर्थवादे, कलञ्जभक्षणे नरकसाधनत्वबोधके न कलञ्जं भक्षयेदिति निषेधे चाज्ञातार्थज्ञापकत्वस्य सत्त्वादतिव्याप्तिरित्याशङ्क्याह—**स चेति**। स विधिः प्रमाणान्तरेणाप्राप्तं यादृशं पदार्थं विधत्ते, तादृशस्य प्रयोजनवत्पदार्थस्य विधानेनार्थवान् प्रयोजनवान् फलवानित्यर्थः। प्रमाणान्तरानवगतप्रयोजनवदर्थविधानं विधिवाक्यफलम्। यत्र तदस्ति, स एव विधिरित्युक्तं भवति। एवं चोक्तार्थवादनिषेधयोरनवगतार्थावगमकत्वेऽपि तादृशार्थविधानाभावाद् न तत्र विधित्वप्रसङ्ग इत्याशयः। नन्वेवं विधायको विधिरिति लक्षणमुच्यताम्। किमित्यज्ञातार्थज्ञापको विधिरित्युक्त्वाऽनन्तरमन्य-

**यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते। यथा सोमेन यजेतेत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्। सोमपदे मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति वाक्यार्थबोधः। न चोभयविधाने वाक्यभेदः। प्रत्येकमुभयस्याविधानात्; किन्तु विशिष्टस्यैकस्यैव विधानात्। न च ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिना प्राप्तयागोद्देशेन सोमरूपगुणविधानमेवास्तु सोमेन यागं भावयेदिति,**

---

दुच्यते। सत्यं तथैव वक्तव्यम्। तथा च चोदनासूत्रे भाष्यं चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरिति। चोदना नाम विधिः। प्रवर्तकमिति च विधायकमुच्यते। तद्यथा पुरुषस्य निवर्तकं वाक्यं निषेध इति तल्लक्षणमित्युपरिष्टाद्वदिष्यति तथाऽत्र पुरुषस्य प्रवर्तकं वाक्यं विधिरिति वक्तव्यम्। तथापि सर्वत्र प्रवर्तकस्य विधेरज्ञातार्थज्ञापकत्वमपि स्वभाव इति बोधयितुमेवमाहेति वयं समर्थयामहे।

वस्तुतस्तु 'तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान् स चाप्राप्तमर्थं विधत्ते' इति स्वग्रन्थोपक्रमानुगुणं आपदेवेन विशदमभिहितमर्थम् अयं ग्रन्थकारो बह्वाकुलं वदतीति किं कुर्मः कलिशिष्या वयमाचार्यदोषमुद्घोषयामः। ननु विधिस्वभावबोधनाय प्रमाणान्तराप्राप्तार्थविधायकत्वमुच्यताम्। प्रयोजनवत्त्वमर्थस्य किमर्थमत्रोच्यत इति चेदुच्यते। विधानं हि कर्तव्यताबोधनम्। पुरुषस्य प्रवर्तनमिति यावत्। पुरुषस्य प्रवर्त्तनं च निष्प्रयोजने न सम्भवतीति प्रवर्तकत्वोपपत्त्यै तदभिधानमिति। अत्र वक्राभिधानेऽपि 'स च तादृशप्रयोजनवदर्थविधानेनार्थवान् यादृशोऽर्थः प्रमाणान्तरेणाप्राप्तः' इत्येतावति कर्तव्ये यादृशञ्चेति चकारोपादानं विधत्त इत्याख्यातोपादानञ्च बत रचनापाटवदौर्विध्यं प्रथयति। **मानान्तरेणाप्राप्तमिति**। न चाग्निहोत्रं जुहोतीति वचनान्तरेणाग्निहोत्रहोमः प्राप्त एवेति शङ्क्यम्। तत्र हि अग्निहोत्रहोमेन यत्किञ्चिदिष्टं भावयेदिति बोधाद् यत्किञ्चिदिष्टसाधनत्वेनैव होमः प्राप्यते। अत्र तु स्वर्गसाधनत्वेन प्राप्यते। तथा चानेन रूपेण मानान्तराप्राप्त एव होम इति। अयमुदाहृतो विधिर्गुणवर्जं कर्ममात्रविधायकः। अथ कर्मवर्जं गुणमात्रविधायकः कश्चिद्विधिरस्तीति दर्शयति—**यत्रेति**। यस्मिन् वाक्य इत्यर्थः। तदुद्देशेन तस्य कर्मण उद्देश्यत्वमङ्गीकृत्य। **विधत्त इति**। विधिरिति शेषः।

अथोभयविधायकोऽप्यस्तीति दर्शयति—**यत्र त्विति**। उभयम् गुणः कर्म च। विशिष्टम् एकविशेषितमपरम्। विशिष्टमित्युक्तं तत्र यागविशेषितसोमविधानमिति न मन्तव्यमिति मन्वान आह—**सोमविशिष्टयागेति**। भावार्थाधिकरणन्यायोऽत्रानुसन्धेयः। नन्वत्र सोममात्रवाचि यागमात्रवाचि च पदमस्ति न। तद्वैशिष्ट्यवाचकं

**किं मत्वर्थलक्षणयेति वाच्यम्, तस्याधिकारविधित्वेनोत्पत्तिविधित्वासम्भवात्। ननूद्भिदा यजेत पशुकाम इत्यस्येव ज्योतिष्टोमेनेत्यस्यापि उत्पत्त्यधिकारविधित्वमस्त्विति चेत्, न, दृष्टान्त उत्पत्तिवाक्यान्तरा-**

किञ्चित्। तत्कथमत्र विशिष्टप्रत्यय इत्याशङ्क्य लक्षणया तत्प्रत्यय इति समादधान एव प्रकृतवाक्यार्थबोधमभिलपति—**सोमपद इति**। **मत्वर्थेति**। मतोः मतुप्प्रत्ययस्य योऽर्थः सम्बन्धीति तस्य लक्षणयेति। नन्वेकस्मिन् वाक्ये एकेनैव विधेयेन भवितव्यम्। अन्यथा वाक्यस्य एकत्वानुपपत्तेः। अर्थैकत्वादेकं वाक्यमिति ह्युक्तम्। अत्र च सोमस्य यागस्य चोभयोर्विधाने विधेयानेकत्वाद्वाक्यस्याप्यनेकत्वप्रसङ्गः। न च विशिष्टविधानान्न वाक्यभेदः, अत एव पूर्वं 'यत्र तूभयमप्राप्तं तत्र विशिष्टं विधीयते' इत्युक्तम्, नोभयं विधीयत इतीति वाच्यम्। विशिष्टं वा विधीयतां शुद्धं वा। उभयोर्विधानमस्ति न वा। नास्ति चेदन्यतरस्यावैधत्वप्रसङ्गः। अस्ति चेद्वाक्यभेदः। तत्र विशिष्टविधानमित्यनेन न कश्चित्परिहार उक्तो भवतीति शङ्कां परिहरति—**न चेति**। वाक्यस्यानेकत्वं वाक्यभेदः। **प्रत्येकमिति**। एकस्येतरविशेषणत्वमन्तरेत्यर्थः। स्वातन्त्र्येणेति यावत्। सोमेन भावयेत्, यागेन भावयेद् इति नात्र विधानप्रकारः; किन्तु सोमवता यागेन भावयेदिति। तथा च सोमवता यागेनेति पदद्वयेनापि एकस्यैवार्थस्योपादानात् तस्य विधाने अग्निहोत्रेण होमेनेति नामधेयस्थल इव न विधेयानेकत्वप्रयुक्तो वाक्यभेदो भवति। विशिष्टे विशेष्यं साक्षाद्विषयीकुर्वन् श्रूयमाणो विधिर्विशेषणविधायकं विध्यन्तरमाक्षिपतीत्यन्यतरस्यावैधत्वमपि नास्तीति भावः। एवमुभयविधाने वाक्यभेदो भवतीति विशिष्टविधानं तदर्थं सोमपदे मत्वर्थलक्षणा चाश्रीयत इत्युक्तम्। तत्र गुणमात्रस्य एकस्यैव विधानाङ्गीकाराद् वाक्यभेदो नास्तीति न तदर्थं विशिष्टलक्षणावश्यंभावः। तदभावे च मत्वर्थलक्षणाक्लेशोऽपि नाङ्गीकर्तव्य इत्याक्षेपं परिहरति—**न चेति**। **तस्येति**। ज्योतिष्टोमवाक्यस्येत्यर्थः।

अयं भावः—सर्वत्र प्रवर्तनात्वेनैकरूपेण प्रतीयमानस्यापि विधेस्तात्पर्यगत्या उत्पादनं विनियोजनम् अधिकारबोधनम् अनुष्ठापनम् इति मिथो भिन्नाश्चत्वारो व्यापाराः प्रतीयन्ते। तत्रैकव्यापारवतो विधेर्व्यापारान्तरं न सम्भवतीति ज्योतिष्टोमवाक्ये फलपदश्रवणादधिकारबोधनरूपव्यापारवत्त्वेन प्रतीयमानस्योत्पादनव्यापारवत्त्वं नाङ्गीकर्तुमुचितमिति। अन्यत्र क्वचिदुक्तव्यापारद्वयमप्येकस्य विधेरङ्गीकृतमिति प्रदर्श्य तद्दृष्टान्तेनात्रापि व्यापारद्वयमस्त्विति प्रत्यवतिष्ठते—**नन्विति**। **उद्भिदा** उद्भिन्नामकेन। **उत्पत्तीति**। उत्पत्तिश्चाधिकारश्च तयोर्विधिस्तत्त्वम्। **दृष्टान्त इति**। उद्भिद्वाक्य इत्यर्थः। तथात्त्वेत्यत्रान्वयः। तथात्त्वम् उत्पत्त्यधिकारोभयविधित्वम्।

**भावेनान्यथानुपपत्त्या तथात्वाश्रयणात् । किञ्च ज्योतिष्टोमेनेत्यस्योभयविधित्वेऽनेनैव यागस्तस्य फलसम्बन्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः। तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम् ।**

**॥ इति विधिपरिच्छेदे विधिस्वरूपनिरूपणम् ॥**

**विधिश्चतुर्विधः — उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः,**

---

अयमाशयः—एकव्यापारशालिनो विधेर्गौरवाद्व्यापारान्तरं नाङ्गीकर्तव्यमित्युत्सर्गः गत्यभावे सर्वमपि गौरवं सह्येत, प्रामाणिकस्य गौरवस्यादोषत्वात् । तदत्र 'उद्भिदा यजेत', 'उद्भिदा यजेत पशुकामः' इति वाक्यद्वयञ्चेत् श्रूयेत तदा एकत्र विधिरुत्पादकः, अपरत्राधिकारबोधक इत्यङ्गीक्रियेतैव । तदभावात्तु एकत्रैव व्यापारद्वयमङ्गीकृतम् । प्रकृते तु सोमेन यजेतेति ज्योतिष्टोमेन स्वर्गकामो यजेतेति च वाक्यद्वयश्रवणात्तथाऽङ्गीकारो नोचित इति । एवं सकृच्छ्रुतस्य विधेरेकव्यापारवत्त्वस्वाभाव्यात् तस्य भङ्गप्रसङ्गो यदि ज्योतिष्टोमवाक्यस्योभयविधित्वमिति दूषणमुक्तम् । अथाद्य 'वृश्चिकभिया पलायमानस्य आशीविषमुखे निपातः' इति न्यायेनाल्पं दोषं परिहर्तुमुद्यतेन महान् दोषोऽङ्गीकृतो भवतीति दर्शयति—**किञ्चेति । उभयेति** । उत्पत्त्यधिकारोभयेत्यर्थः । **याग इति ।** उत्पत्तिविधित्वाद्विजातीयेन यागेनेष्टं भावयेदिति यागो बोधनीयः । अधिकारवाक्यत्वात् तेन विजातीयेन यागेन स्वर्गं भावयेदिति फलसम्बन्धोऽपि बोधनीय इत्यर्थः । सुदृढः दुष्परिहरः । **वाक्यभेद इति ।** ज्योतिष्टोमेन यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेति भिन्नवाक्यसत्त्वे उभयोर्यावान्व्यापारस्तावानेकस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्य प्रसज्यत इत्याशयः ।

नन्वस्त्वयं दोषः । स कथं मत्वर्थलक्षणामपेक्ष्य महानित्याशङ्क्य एकस्य वाक्यस्य वाक्यद्वयव्यापाराङ्गीकारो हि वाक्यगतो दोषः । मत्वर्थलक्षणा चैकपदमात्रगता । तत्र पदसमुदायरूपवाक्यगतदोषापेक्षया एकपदमात्रवृत्तिदोषोऽल्प इति किमिदमुपपादनीयमिति समाधानाभिप्रायेणाह—**तद्वरं सोमपद इति ।**

एवं विधायकं वाक्यं विधिरिति विधिस्वरूपं लक्षितम् । तस्याज्ञातार्थज्ञापकत्वं स्वभाव इति दर्शितम् । अज्ञातश्चार्थः क्वचित्कर्म क्वचिद्गुणः क्वचिदुभयमिति तत्तद्विधायकत्वेन विधिवाक्यविभागोऽपि कश्चिदत्र व्यञ्जितः । अत्र कर्मविधिस्त्रिविधः — फलसम्बन्धवर्जं कर्ममात्रविधिः, प्राप्तस्यैव कर्मणः फलोद्देशेन विधिः, अप्राप्तस्य कर्मणः फलोद्देशेन विधिरिति । यथा क्रमेण अग्निहोत्रं जुहोति, अग्निहोत्रं जुहुयात्स्वर्गकामः, उद्भिदा यजेत पशुकाम इति । गुणविधिरपि द्विविधः — फलोद्देशेन गुणविधिः, अन्योद्देशेन गुणविधिरिति । आद्यो दध्नेन्द्रियकामस्य जुहोतीति । द्वितीयो दध्ना जुहोतीति । विशिष्टविधिरपि द्विविधः — फलसम्बन्धरहितविशिष्टविधिः,

**प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः, यथा — अग्निहोत्रं जुहोतीति ।**

---

तत्सहितविशिष्टविधिरिति । आद्यः सोमेन यजेतेति । अन्त्यः सोर्यञ्चरुन्निर्वपेद्ब्रह्म-वर्चसकाम इति । एतद्विस्तरः परिभाषायां तद्व्याख्याने च । एतादृशानन्यान् विधिविभाग-प्रकारानभिसन्धाय सूत्रकारेणाध्यायक्रमस्यापरिकल्पितत्वात् तान् सर्वानुपेक्ष्य द्वितीय-प्रभृति-षष्ठपर्यन्ताध्यायपञ्चकाभिप्रेतविधिव्यापारभेदानुसारेण सम्भवन्तं विधिविभागं केवलं कतिपयाध्यायार्थनिरूपणोपयोगितया करोति—**विधिश्चतुर्विध इति** । द्वितीया-ध्याये उत्पत्तिविधिविषयस्य, तृतीये विनियोगविधिविषयस्य, चतुर्थपञ्चमयोः प्रयोग-विधिविषयस्य, षष्ठेऽधिकारविधिविषयस्य च विचारः सूत्रकृता क्रियते । अयमपि ग्रन्थकारस्तेनैव क्रमेण इमान्विधीन् विचारयिष्यति । तथा सति प्रयोगविधिरधि-कारविधिश्चेति निर्देशोऽत्र कर्तव्ये तयोर्व्युत्क्रमेण निर्देशकरणमविचार्यापदेवीयक्रमानु-सरणशीलतां ग्रन्थकारस्य दृढीकरोति । अत एव सम्प्रति आपदेवीये क्वचित्प्रयोग-विधिरधिकारविधिश्चेति मूलानुराधिक्रमेण पाठ उपलभ्यमानोऽर्वाचोनः । प्राचीनस्तु व्युत्क्रमेणैवेति ज्ञेयम् । एतं पितुर्व्युत्क्रमनिर्देशं समर्थयन्नापदेवपुत्रोऽनन्तदेवः स्वव्या-ख्याने भाट्टालङ्कारे यत्किञ्चिदाह । वयन्तु पश्यामः प्रामादिक एवायं व्युत्क्रम-निर्देश इति ।

उत्पत्तिविधिं निरूपयति—तत्र **कर्मेति** । कर्मस्वरूपमेव कर्मस्वरूपमात्रं तस्य बोधकः । अग्निहोत्रहोमेन इष्टं भावयेदिति बोधजनकत्वेऽपि इष्टविशेषस्य वाक्या-न्तरेण बोध्यमानत्वाद् इष्टसाधनोभूतः, अग्निहोत्रं जुहोतोति वाक्यभिन्नयावद्वाक्य-बोध्यकर्मविलक्षणो विजातीयहोमरूपः कर्मविशेषोऽस्तीति बोधन एवास्य वाक्यस्य तात्पर्यमवसीयते । तेन कर्मस्वरूपबोधकत्वमस्य विधेरवगन्तव्यम् । एवं कर्मस्वरूप-प्रथमबोध एव उत्पत्तिरित्युच्यते । कारकहेतुभूताद् दण्डादेर्घटादिकार्यस्योत्पत्तिः आद्यक्षणसम्बन्धः । ज्ञापकहेतोस्तु वाक्यात् कर्मण उत्पत्तिः आद्यज्ञानमेवेति । मात्र-पदेन स्वर्गादिफलसम्बन्धादिव्यवच्छेदः ।

ननु उद्भिदा यजेतेत्यत्र फलसम्बन्धस्यापि बोधेन उत्पत्तिविधित्वानुप-पत्तेरुक्तमुभयविधित्वं तस्यासङ्गतं स्यादिति चेदुच्यते । अत्र विधिरिति न विधिवाक्यं विवक्षितम् । उद्भिदेत्युत्पत्त्यधिकारोभयविधेः सोमेन यजेतेत्युत्पत्ति विनियोगोभयविधेः सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्युत्पत्तिविनियोगाधिकार-त्रयविधेश्च सत्त्वेन तेषामनिर्देशेन विधिवाक्यविभागपरत्वे न्यूनतापत्तेः किन्तु अज्ञातज्ञापनरूपो विधिव्यापारः । तच्चाज्ञातज्ञापनं यागादिस्वरूपस्य, दधिहोमादेः अङ्गाङ्गिभावसम्बन्धस्य, फलसम्बन्धस्य, कर्तव्यतायाश्चेति चतुर्धा भवति ।

**अत्र च विधौ कर्मणः करणत्वेनान्वयः। अग्निहोत्रहोमेनेष्टं भावयेदिति।**

**ननु यागस्य द्वे रूपे द्रव्यं देवता च। तथा च रूपाश्रवणे अग्निहोत्रं जुहोति इति कथमुत्पत्तिविधिः। अग्निहोत्रशब्दस्य तु तत्प्रख्यन्यायेन नामधेयत्वादिति चेत्, न, रूपाश्रवणेऽप्यस्योत्पत्तिविधित्वात्। अन्यथा रूपश्रवणाद् दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात्। तथा च अग्निहोत्रं जुहोतीति वाक्यमनर्थकं स्यात्।**

**॥ इत्युत्पत्तिविधिप्रकरणम् ॥**

---

तत्र केषुचिद्विधिवाक्येषु विधेर्व्यापारद्वयस्य त्रयस्य च समावेशेऽपि विधिव्यापारश्चतुर्विध एवेत्यस्य नानुपपत्तिः। नन्वेवमुत्पत्तिविधिव्यापारलक्षणे मात्रपदं व्यर्थम्। व्यापारान्तरस्य स्वरूपबोधकत्वाभावेन स्वरूपबोधकत्वमात्रस्य लक्षणत्वेऽप्यतिव्याप्तिविरहात्। सत्यं नातिव्याप्तिः। एवमेकव्यापारबोध्यस्य अपरव्यापाराबोध्यत्वादतिव्याप्त्यभावादेव विनियोगादिलक्षणेषु न मात्रशब्दोपादानं पश्यामः। तथापि सर्वेषु विधिव्यापारेषु प्रवर्तनारूपस्य विधेरेकरूपेण प्रतीयमानत्वाद् उत्पत्तेरसङ्कीर्णरूपेणाप्रतीयमानतया अङ्गाङ्गिभावसम्बन्धः फलसम्बन्धो विलक्षणकर्मस्वरूप इत्येवं बहुविधेषु ज्ञाप्यांशेषु अन्यपरिहाणेन विलक्षणकर्मस्वरूपमात्रे यो विधिव्यापारः स उत्पत्तिव्यापार इति विवेकसिद्धये तदुपादानम्। भाट्टालङ्कारकारोऽपि सर्वमिदं मनसि निधायातिसङ्ग्रहेणाह—मात्रशब्दो भिन्नक्रमः कर्मस्वरूपबोधकतामात्रम् उत्पत्तिविधित्वमित्यर्थ इति।

अत्रोदाहृते विधिवाक्ये धात्वर्थस्य भावनायां साध्यत्वेनान्वय इति मतान्तरमनुपपन्नमित्यभिप्रायेणाह—**अत्र चेति**। इदमापदेवीयप्रकरणानुसार्यवतरणम्। वस्तुतस्तु धात्वर्थस्य भावनायां साध्यत्वादिनाप्यन्वयोऽस्तीति विध्यन्तरप्रकरणे प्रतिपादयिष्यन् भावनाप्रकरणे यदुक्तं यागादिर्धात्वर्थः करणत्वेनान्वेतीति तदस्मिन्नेव विधौ द्रष्टव्यमिति ज्ञापयतीति वयमेतद्ग्रन्थानुसारेणावतरणमुचितं मन्यामहे।

अग्निहोत्रं जुहोतीति वाक्यस्योत्पत्तिविधित्वं न भवितुमर्हतीति शङ्कते—**नन्विति**। आपदेवीयेऽन्यस्मिन् प्रकरणे उक्तमर्थमत्र घटयितुं शङ्कोपक्षेप इति ज्ञेयम्। **यागस्येति**। यागहोमयोः प्रक्षेपांशघटनाघटनाभ्यां भेदो रूपद्वयसापेक्षत्वन्तु समानम्। तेन यागस्य द्विरूपापेक्षत्वमादाय होमस्यात्रोत्पत्त्याक्षेपः कथमिति नाशङ्कनीयम्। **रूपं** स्वरूपनिरूपकम्। नन्वग्निहोत्रमिति पदेनाग्नेरुपादानात् रूपं श्रूयत एवेति शङ्कां परिहरति—**अग्नीति**। तत्प्रख्यन्यायो नामधेयपरिच्छेदे निरूपयिष्यते। **नामधेय-**

**अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा—दध्ना जुहोतीति। स हि तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति। गुणविधौ च धात्वर्थस्य साध्यत्वेनान्वयः।**

---

**त्वादिति**। तथा च तेन पदेन देवताविधानं नास्तीति भावः। उत्सर्गोऽयम्—यत्र रूपं श्रूयते तत्र कर्मविधिरिति। अत्र तु तस्यापवाद इत्याशयेन समादधाति—**रूपाश्रवणेऽपीति**। तथा चेति। सोमेन यजेतेतिवद् दध्नेति वाक्यस्य विशिष्टविधित्वेऽत्रोत्पन्नस्य होमस्य अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यनेन फलसम्बन्धे कृते उत्पत्तिप्रयोगाधिकारत्रय-बोधस्य प्रकारान्तरेणैव सिद्धत्वात् तेष्वन्यतमस्याप्यबोधकत्वादिदं वाक्यं व्यर्थं स्यादिति। अत्र दूषणान्तरमप्यन्यत्र।

विनियोगविधिं निरूपयति—**अङ्गेति**। अङ्गप्रधानयोः सम्बन्धः, अस्य प्रधानस्य इदमङ्गमिति अङ्गाङ्गिनोर्निरूप्यनिरूपकभावस्तद्बोधक इति। अङ्गस्य प्रधानेन सम्बन्धबोधक इति विग्रहः। प्रधानम् अङ्गि। लक्षणसमन्वयं दर्शयति—**स हीति**। **प्रतिपन्नेति**। प्रतिपन्नो ज्ञातः अङ्गभावः अङ्गत्वं यस्य तस्य। **दध्न इति**। दध्नेति तृतीयया दध्नः करणत्वे प्रतीते करणस्य सर्वस्य परोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्व-नियमात् तादृशकृतिव्याप्यत्वरूपमङ्गत्वं दध्नः प्रतीतं भवति। एवमस्याङ्गत्वे प्रतीते किमङ्गीति अङ्गिन्यपेक्षिते समभिव्याहृतधात्वर्थस्य होमस्य अङ्गित्वमर्थात् सिद्ध्यति। एवमेकस्य प्राधान्ये अन्यस्याङ्गत्वे च सति तयोः परस्परसम्बन्धोऽनेन वाक्येन क्रियत इत्यर्थः। तदिदं विशदयितुम् उदाहृतवाक्यजन्यं बोधमभिलपति—**दध्ना होममिति**। भावयेदित्येवं विधत्ते बोधयतीत्यन्वयः। अत्र केचिद् अङ्गप्रधानयोः सम्बन्धो नाम अङ्गाङ्गिभावः। तथा च अङ्गताबोधको विधिर्विनियोगविधिरित्यर्थ इति व्याचक्षते। तथा सत्यत्र आपदेवीये च तृतीयया प्रतिपन्नाङ्गभावस्य दध्न इत्युक्तिरसङ्गता स्यादिति ज्ञेयम्। नन्वेवं तृतीयया दध्नोऽङ्गत्वे अर्थाद्धोमस्य प्राधान्ये परस्परसम-भिव्याहाररूपवाक्यप्रमाणेन परस्परसम्बन्धे च सिद्धे विधेरनपेक्षणाद्वैयर्थ्यमिति चेत्, अवहितमनाः शृणु। विधेरभावे सत्यं दधि होमाङ्गमिति सिद्ध्यति। होमाङ्गमिति होमसाधनं होमनिर्वर्तकमित्यर्थः। तत्र होमाय कस्मिंश्चिद्द्रव्येऽपेक्षिते तत्साधनत्वा-द्दधि कदाचिदुपादीयताम्। यवाग्वा अपि तु तत्साधनत्वाविशेषात् साऽपि कदाचिदु-पादीयतामिति प्रसङ्गः कथं वार्येत यदि दध्नैव होतव्यमिति विधिर्न नियमयति। विधिरहितपाठादेव तत्सिद्धिरिति चेत्, अनालोच्यकथनमिदम्। विधिरहितपाठे ह्यनुवादमात्रं भवेत्, न तस्य द्रव्यान्तरप्रतिषेधे शक्तिरिति। पाठवैयर्थ्यादेव नियम-सिद्धिरिति चेत्, विधिरेवायमङ्गीकृत इति।

**क्वचिदाश्रयत्वेनापि । यथा दध्नेन्द्रियकामस्य जुहुयादित्यत्र दधिकरणत्वेनेन्द्रियं भावयेत् । तच्च किन्निष्ठमित्याकाङ्क्षायां सन्निधिप्राप्तहोमः आश्रयत्वेनान्वेति ।**

---

**पाण्डित्यख्यातये कुर्वन्ननपेक्षितविस्तरम् ।**
**भाट्टालङ्कारकारोऽपि स्थूलदृश्वात्र दृश्यते ॥**

ननु दध्ना होमं भावयेदिति भावनायां धात्वर्थस्य साध्यत्वेनान्वयकथनमनुपपन्नं पूर्वमर्थभावनाप्रकरणे धात्वर्थस्य करणत्वेनान्वयस्य प्रतिपादितत्वादित्याशङ्क्य यत्र धात्वर्थस्य विधिस्तत्रैव तस्य करणत्वेनान्वयो नान्यत्र । तदिदं पूर्वमेवोक्तम्—'अत्र च विधौ कर्मणः करणत्वेनान्वयः' इति । यत्र तु गुणस्य विधिस्तत्र तस्यैव करणत्वेनान्वयात्करणान्तरस्यानपेक्षितत्वात् साध्यस्यापेक्षितत्वाच्च धात्वर्थस्य भाव्यत्वेनैवान्वय इति समाधानाभिप्रायेणाह—**गुणविधौ चेति** । प्रथममेकधाऽन्वयमुपपाद्य पश्चादन्यथाप्यन्वयोऽस्तीति प्रतिपादने शङ्कमानं शिष्यं प्रति न केवलं पूर्वोक्तकरणत्वातिरिक्तसाध्यत्वरूपेण क्वचिद्धात्वर्थस्य भावनायामन्वयोऽस्ति; किन्तु करणत्वसाध्यत्वोभयातिरिक्तेनापि रूपेण क्वचिदस्तीत्याह—**क्वचिदिति** । फलाय गुणविधिस्थल इत्यर्थः । उदाहरति—**यथेति** । अस्य उत्तरत्राश्रयत्वेनान्वेतीत्यत्रान्वयः । अस्मिन्वाक्ये दध्नेत्यत्र प्रातिपदिकार्थस्य दध्नः प्रत्ययार्थे करणत्वेऽन्वयः , दधिनिष्ठं करणत्वमिति । तस्य च भावनायां न गुणविधाविव निरूपकतासम्बन्धेनान्वयः; किन्तु करणत्वसम्बन्धेन । तथा च दधिनिष्ठकरणत्वकरणिका इन्द्रियभाव्यका भावना विधिविषय इति बोध इति प्राचां मतेनोक्तम्—**दधिकरणत्वेनेति** । इन्द्रियं भावयेदित्यस्यानन्तरम् इति बोधो भवतीति शेषं पूरयित्वा व्याख्येयम् । तच्च दधिकरणत्वञ्च । किन्निष्ठं किन्निरूपितम् । किं प्रतियोगिकमिति पाठः साधीयान् । तस्याप्ययमेवार्थः । आश्रयत्वेन निरूपकत्वेन । होमनिरूपितं यद्धविर्निष्ठ करणत्वं तत्करणिका भावनेति बोध इति भावः । ननु प्रकृतिभूतधात्वर्थस्य प्रत्ययार्थभावनायामेवान्वयो व्युपत्तिसिद्धः । न दध्नेति पदान्तरोपात्ते कारक इत्याशङ्कायामुक्तम्—**सन्निधिप्राप्त इति** । प्राप्त उपस्थितः । अयमाशयः — न वयं दधिकरणत्वस्य निरूपकापेक्षायां धातूपात्तो होमस्तत्र निरूपितत्वसम्बन्धेनान्वेतीति ब्रूमः, येनान्वयाव्युत्पत्तिराशङ्क्येत ; किन्तु अग्निहोत्रहोमसन्निधिपठितेऽस्मिन्वाक्ये प्रतीतस्य दधिकरणत्वस्य निरूपकापेक्षायां सन्निधिरेव होमं तत्त्वेन समर्पयति । तेन दध्नेति पदमेव सन्निधिपर्यालोचनासहितं अग्निहोत्रहोमनिरूपितं दधिनिष्ठं करणत्वं बोधयति । यथा घटादिपदं प्रकरणादिवशाद् घटविशेषं बोधयति तद्वदिति । ननु धात्वर्थस्य भावनायां करणत्वसाध्यत्वातिरिक्तरूपेणान्वयोऽस्तीति प्रतिपादयितव्ये सन्निधिप्राप्तार्थस्य दध्नेत्युपपदार्थे आश्रयत्वेनान्वयप्रति-

**एतस्य विधेः सहकारिभूतानि षट्प्रमाणानि—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेन विधिनाऽङ्गत्वं परोद्देशप्रवृत्तपुरुषकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते।**

**अत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा—विधात्री, अभिधात्री, विनियोक्त्री च। तत्र अभिधात्री लिङाद्यात्मिका। द्वितीया व्रीह्यादि-**

---

पादनस्य का सङ्गतिरिति चेदुच्यते। अस्मिन्वाक्ये इन्द्रियरूपस्य भाव्यस्य दधिकरणत्वरूपस्य करणस्य च लब्धत्वाद्धातूपात्तो होमो भाव्यत्वेन करणत्वेन वा भावनायामन्वयमलभमानः सन्निधिवशात्प्रतीतेन आश्रयत्वसम्बन्धेन तत्रान्वीयमानोऽनुवादो भवति। तथा चानुवादत्वेऽपि धात्वर्थस्य करणत्वसाध्यत्वातिरिक्तेन रूपेण भावनान्वयो भवतीत्येतदत्रावश्यंभावीति तत्प्रदर्शन एव तात्पर्यान्न प्रकृतासङ्गतिः। अथवा दधिकरणत्वं किन्निरूपितमिति निरूपकाकाङ्क्षायां सन्निधिना प्राप्तो निरूपकत्वेन दध्नेत्यत्र सम्बद्धो होम आश्रयत्वेनान्वेति धातूपात्तस्सन् भावनायामाश्रयत्वेनान्वेतीत्यर्थाङ्गीकारान्नासङ्गतिरिति।

एवमङ्गप्रधानसम्बन्धबोधकस्य विनियोगविधेरुदाहरणं वदता तृतीयया प्रतिपन्नाङ्गभावस्य दध्न इति अङ्गताप्रतिपत्तिहेतुस्तृतीयाविभक्तिरुक्ता। तत्र तृतीयाविभक्तिमात्रमङ्गताप्रतिपत्तिहेतुरिति न मन्तव्यम्; किन्तु बहवोऽन्ये हेतवस्तत्र सन्तीत्यभिप्रेत्य तान् विभजते—**एतस्येति। सहकारीति**। सह प्रधानकारणेन सह कुर्वन्ति निष्पादयन्ति कार्यमिति सहकारीणि उपकारकाणीत्यर्थः। इदमेवाङ्गम् अस्य अस्यैवाङ्गम् इदमिति बोधयन्निह विनियोगविधिः प्रथममिदमङ्गम् इदमङ्गीति प्रतिपत्तिमपेक्षते। तेन तादृशप्रतिपत्तिजनकानां श्रुत्यादिप्रमाणानां सहकारित्वं बोध्यम्। किमङ्गत्वं नामेति जिज्ञासायां तल्लक्षणं कथयन्नेव श्रुत्यादिषट्कस्यैवाङ्गत्वप्रमाणत्वे विधिरनपेक्षित इति न शङ्कितव्यम्, उक्तरीत्या श्रुताङ्गमात्रानुष्ठानस्य विधेरभावेऽसिद्ध्याऽनुष्ठाननियामकत्वेन विधेरवश्यापेक्षितत्वादित्यभिप्रायेणाह—**एतेनेति**। एतैः प्रमाणैः सहकृतेन। अङ्गत्वलक्षणमुच्यते—**परोद्देशेति**। ननु सूत्रकारेणेदं लक्षणं नोक्तम्। शेषः परार्थत्वादिति पारार्थ्यस्यैव लक्षणत्वेन तत्र कथनादिति शङ्कायां परोद्देशप्रवृत्तकृतिव्याप्यत्वस्यैवायं पर्यायशब्दः पारार्थ्यमिति। तेन तदेवेदं लक्षणमित्यभिसन्धायोक्तम्—**पारार्थ्यापरपर्यायमिति**। अत्र विस्तरः परिभाषाव्याख्यानयोः।

श्रुतिं निरूपयति—**तत्रेति**। रवः शब्दः। रु शब्दे इति धातोः अण्प्रत्ययात्। पदान्तरसमभिव्याहृतपदरूपस्य वाक्यस्य समाख्यायाश्च शब्दत्वादतिप्रसङ्ग इति

**श्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। सा त्रिविधा—विभक्तिरूपा, समानाभिधानरूपा एकपदरूपा, चेति। तत्र विभक्तिश्रुत्या अङ्गत्वं यथा—व्रीहिभिर्यजेतेति। तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। तदपि पुरोडाशप्रकृतितया। यथा पशोर्हृदयादिरूपहविः-प्रकृतितया यागाङ्गत्वम्।**

---

निरपेक्ष इति विशेषणम्। अङ्गताबोधकपदान्तरनिरपेक्षः सन् अङ्गताबोधको यः शब्दः स श्रुतिरित्यर्थः। तथा च वाक्यस्य समाख्यायाश्च पूर्वपूर्वप्रमाणकल्पनयैव अङ्गता-बोधकत्वान्नैरपेक्ष्यं नास्तीति नातिप्रसङ्गः। इममङ्गतावाचकशब्दं विना अन्ययोरपि शब्दयोः शास्त्रकारास्तत्र तत्र श्रुतिव्यवहारं कुर्वन्ति। ताभ्यां प्रकृतश्रुतेर्विवेकं कर्तुं प्रकृताप्रकृतसाधारण्येन श्रुतिं विभजते—**सेति**। विधात्री प्रवर्तनाबोधिका। अभिधात्री शक्त्यार्थबोधिका। विनियोक्त्री अङ्गताबोधिका। ननु विधात्र्या विनियोक्त्र्याश्च शक्त्या स्वस्वार्थबोधकत्वेन अभिधात्रीत्वस्यापि सत्त्वात् त्रेधा विभागो नोपपन्न इति चेत्, न, ब्राह्मणपरिव्राजकन्यायेन अभिधात्रीति प्रवर्तनाङ्गतातिरिक्तार्थबोधकत्वस्य विवक्षितत्वात्। **द्वितीयेति**। व्रीहीन् प्रोक्षतीत्यादौ व्रीह्यादिरूपः शब्दः अभिधात्री श्रुतिरित्यर्थः। नेमे श्रुती प्रकृते विवक्षिते; किन्तु विनियोक्त्रीत्युक्ता तृतीयैव। निरपेक्षो रव इत्युक्तलक्षणशालिन्या एव विनियोक्त्रीत्वादित्यभिप्रायेणाह—**यस्य चेति**। श्रवणादेव न वाक्यादिप्रमाणेष्विव अन्यकल्पनया विलम्बेन सम्बन्धः अङ्गाङ्गिभाव-पर्यवसायी साध्यत्वसाधनत्वादिरूपः। अनन्तदेवस्तु अत्र अन्यथा व्याचख्यौ। तदनुसारेण निरपेक्षो रव इति विधात्र्यादीनां तिसृणामपि श्रुतीनां सामान्यलक्षणमिति तत एवावगन्तव्यम्। विनियोक्त्रीं विभजते—**सेति**। एकाभिधानैकपदश्रुतिस्वरूपं सर्वमेव शब्दभावनाप्रकरणेऽस्माभिर्विवृतम्। अङ्गत्वं यथेति। तथा दर्शयाम इति शेषः। प्रथमं तृतीयाविभक्त्या अङ्गत्वं दर्शयति—**व्रीहिभिरिति**। तृतीयाश्रुत्या यागाङ्गत्वं यत्र तत्र क्वचित् तस्याङ्गस्य प्रधानोपकारकत्वं साक्षाद्भवति। यथा दध्ना जुहोतीति पूर्वोदाहृतस्थले दध्नो होमोपकारकत्वम्। क्वचित्पुनः परम्परया। तदिदं प्रकृतोदाहरणे द्रष्टव्यमित्यभिप्रायेणाह—**तदपीति**। यागाङ्गत्वप्रयुक्तं यागोपकारकत्वमपीत्यर्थः। विस्तरः परिभाषाव्याख्यानयोः सन्निपत्योपकारकाङ्गत्वप्रकरणे। ननु साक्षादुपकारकत्वं परित्यज्य परम्परयोपकारकत्वाङ्गीकारोऽनुचित इति न शङ्कितव्यम्। प्रमाणानुसारेण सर्वस्याप्यङ्गीकर्तव्यत्वादित्यभिप्रेत्य परम्परयोपकारकत्वे स्थलान्तरमुदाहरति—**यथेति**। अत्र उपपादनमापदेवीये। हविः हूयमानं द्रव्यम्।

**अरुणया एकहायन्या गवा सोमं क्रीणातीत्यस्मिन्वाक्ये अरुणस्यापि तृतीयया श्रुत्या क्रयाङ्गत्वम्। तदपि गोरूपद्रव्यपरिच्छेदद्वारा न तु साक्षात्, अमूर्तत्वात्। व्रीहीन् प्रोक्षतीति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीया-श्रुत्या। तच्च प्रोक्षणं न व्रीहिस्वरूपार्थम्। तस्य तेन विनाप्युपपत्तेः; किन्तु अपूर्वसाधनत्वप्रयुक्तम्। व्रीहीनप्रोक्ष्य यागानुष्ठानेऽपूर्वानुपपत्तेः।**

---

एवं तृतीयाश्रुतिकृतम् अङ्गत्वं द्रव्यस्य दर्शितम्। सम्प्रति गुणस्य दर्शयति—**अरुणयेति**। अरुणस्यापि आरुण्यगुणस्यापि। अत्रापि परम्परया अङ्गत्वमित्याह—**तदपीति**। अयमाशयः — हिरण्येन क्रीणाति वाससा क्रीणातीत्यादिना विहितं हिरण्य-वासःप्रभृतिकम् आनीय सोमविक्रेत्रे दत्वा सोमक्रयः क्रियते। ततश्च क्रयोद्देशप्रवृत्त-दानादिक्रियाव्याप्यत्वाद् हिरण्यवासःप्रभृतिकं सोमक्रयाङ्गं भवति। तद्वद् अरुणया क्रीणातीति विहितमारुण्यम् आनीय दातुं न शक्यम्। हिरण्यादिवद् मूर्तिरहितत्वेन हस्तेनोपादातुमशक्यत्वात्। ततश्च तस्य क्रयाङ्गत्वं न साक्षाद् भवति; किन्तु अस्मिन्नेव वाक्य एकहायनीरूपस्य मूर्तगोद्रव्यस्य विहितत्वात् तस्य परिच्छेदकगुणा-काङ्क्षत्वात् तत्रायम् अरुणगुणः परिच्छेदकत्वेनान्वेति। अमूर्तस्यापि हि परिच्छेदकत्वं भवति। परिच्छेदो नाम इतरव्यावृत्तिः। अरुणां गां दृष्ट्वा अनया क्रयः साध्यः, नान्ययेति हि व्यावृत्तिर्जायते। तस्मात् क्रयसाधनीभूतैकहायनीरूपद्रव्यपरिच्छेदकरण-द्वारा क्रयाङ्गमरुणगुणो न साक्षादिति। न च अरुणयेत्यत्र अरुणयापदेन विशेष्यनिघ्नेन आरुण्यगुणवतो द्रव्यस्यैवाभिहितत्वात् तस्यैव तृतीयया अङ्गत्वबोधाद् आरुण्यगुण-स्याङ्गत्वं कृत्वा तस्य साक्षात् परम्पराविचारो नोपपद्यत इति शङ्क्यम्। आकृत्यधि-करणन्यायेन अरुणादिपदानां गुणमात्रवाचित्वेन द्रव्यवाचित्वाभावात्। सिद्धान्तरीत्या लक्षणां विनैव विवक्षितार्थोपपत्तेः, लक्षणया प्रकृते द्रव्यपरत्वाभावाच्चेत्यलम्।

अथ द्वितीयाविभक्तिरूपश्रुतिकृतमङ्गत्वं दर्शयति—**व्रीहीन् प्रोक्षतीति**। ननु प्रथमं द्वितीया कृतमङ्गत्वमुक्त्वा पश्चात् तृतीयाकृतं वक्तुमुचितम्। सत्यम्। किन्त्वत्र व्रीहीणा-मुद्देश्यत्वाद् मानान्तरप्राप्तस्येव उद्देश्यत्वेन मानान्तरप्राप्तिप्रदर्शनाय प्रथमं व्रीहिविधि-वाक्यप्रदर्शनमिति। तदुक्तमनन्तदेवेन — 'तृतीयावगतव्रीहिविनियोगोपजीवनेन द्वितीयाश्रुत्या प्रोक्षणविनियोग इत्याह' इति। उद्देश्यतावच्छेदकं व्युत्पादयितुमाह—**तच्चेति**। न व्रीहिस्वरूपार्थं न व्रीहित्वावच्छिन्ननिष्पत्त्यर्थं व्रीहित्वावच्छिन्नोद्देशेन न विधीयत इत्यर्थः। कस्मादित्यत्राह—**तस्येति**। व्रीहिस्वरूपस्य व्रीहित्वावच्छिन्नस्येति यावत्। तेन विना प्रोक्षणाभावेऽपीत्यर्थः। उपपत्तेर्निष्पन्नत्वात्। अनिष्पन्नस्य हि

**एवं सर्वेष्वङ्गेषु अपूर्वप्रयुक्तमङ्गत्वं बोध्यम् । एवम् इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्र द्वितीयया श्रुत्या मन्त्रस्याङ्गत्वम् । यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो बोध्यः ।**

---

साध्यत्वेन उद्देश्यत्वं भवति । व्रीहित्वावच्छिन्नद्रव्यं तु प्रोक्षणाभावेऽपि प्रागेव स्वयं सिद्धमिति न तस्य उद्देश्यत्वं भवितुमर्हतीति व्रीहीनिति शब्दोपात्तमपि व्रीहित्वं नोद्देश्यतावच्छेदकमिति भावः । किमर्थं तर्हि प्रोक्षणमित्यत्राह—**किन्त्विति** । व्रीहीणामपूर्वसाधनत्वसिद्ध्यै प्रोक्षणमिति भावः । तथा च अपूर्वसाधनत्वावच्छिन्नस्य पूर्वसिद्धत्वात् तदुद्देशेन प्रोक्षणं विधीयत इति अपूर्वसाधनत्वमिह उद्देश्यतावच्छेदकमिति भावः । प्रोक्षणस्य व्रीहिनिष्ठापूर्वसाधनत्वार्थत्वमुपपादयति—**व्रीहीनिति** । अत्र विस्तरोऽक्षरार्थेऽपूर्वविधिप्रकरणे । तदिदमपूर्वसाधनत्वावच्छिन्नोद्देश्यकत्वं प्रोक्षणादिवददृष्टार्थेषु, अवघातादिवद् दृष्टार्थेषु, विनियुक्तसंस्कारेषु विनियोक्ष्यमाणसंस्कारेषु चेति सर्वत्रावगन्तव्यमित्याशयेनाह—**एवमिति** । श्रुत्यादिप्रमाणषट्कावगम्येषु सर्वेषु अङ्गेष्विति चात्र अभिप्रायो बोध्यः । द्वितीयाश्रुतिकृत एव अङ्गत्वे उदाहरणान्तरमाह—**एवमिति ।**

ननु किमर्थमिदमुदाहरणान्तरमिति चेत्, इमामगृभ्णन्नित्यत्र वाक्यकृतमङ्गत्वमिति केचिद्वदन्ति । तन्निराकरणाय श्रुतिकृतमेवात्राङ्गत्वमिति बोधयितुमस्येहोदाहरणमिति स्पष्टमापदेवीये । सप्तमीश्रुतिकृतमङ्गत्वमुदाहरति—**एवमाहवनीय इति । जुहोतीतीति ।** इत्यस्मिन्वाक्ये स्थितं यद् होमाङ्गत्वं तत् सप्तमीश्रुत्येत्यन्वयः । एवं द्वितीयातृतीयासप्तमीरूपश्रुतित्रयेण कृतमङ्गत्वमुदाहृतम् । अथ विभक्तिरूपश्रुतिप्रकरणमुपसंहरन्, चतुर्थीपञ्चमीषष्ठीति इमा अपि विभक्तयः श्रुतयो भवन्ति । तत्कृतमङ्गत्वं विस्तरभयाद् नास्माभिरुदाह्रियते । ग्रन्थान्तरेषु तु ज्ञेयमित्याह—**एवमन्योऽपीति ।** क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र चतुर्थीश्रुत्या दण्डप्रदानस्य मैत्रावरुणाङ्गत्वम् । चात्वालान्मृदमाहरतीत्यत्र पञ्चमीश्रुत्या चात्वालस्य मृदाहरणक्रियाङ्गत्वम् । दध्नेन्द्रियकामस्य जुहुयादित्यत्र षष्ठीश्रुत्या दध्न इन्द्रियाङ्गत्वम् । अनयैव यजमानस्य याज्येत्यत्र यजमानस्य याज्याङ्गत्वमित्येवं चतुर्थ्यादिविभक्तिकृतोऽपि विभक्तिश्रुतिप्रमाणको विनियोगो ज्ञेय इत्यर्थः । अत्र द्वितीयाविभक्त्यादिभेदेन षड्विधायां विभक्तिश्रुतौ काचित् शेषत्वस्यैव साक्षाद् बोधिका । यथोदाहृता तृतीया पञ्चमी सप्तमी च । काचिदङ्गित्वबोधनद्वाराऽङ्गत्वबोधिका । यथा द्वितीया चतुर्थी च । काचिदुभयथाऽपि । यथा षष्ठीत्यपि बोध्यम् ।

**पशुना यजेतेत्यत्र एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्ग-त्वम् । यजेतेत्याख्याताभिहितसङ्ख्याया आर्थीभावनाङ्गत्वं समानाभिधान-श्रुतेः । एकपदश्रुत्या च यागाङ्गत्वम् । न च अमूर्तायास्तस्याः कथं**

---

एवं विभक्तिश्रुत्याऽङ्गत्वमुक्तम् । सम्प्रति एकाभिधानरूपयाऽऽह—**पशुनेति । कारकाङ्गत्वमिति** । कारकं तृतीयाविभक्त्युपात्तं करणत्वं तदङ्गत्वं तत्र विशेषण-त्वम्, न तु पूर्ववत् तदुद्देशप्रवृत्तकृतिसाध्यत्वरूपमिति बोध्यम् । अत्र बोधप्रकारः अक्षरार्थे वाक्यभेदान्नामधेयप्रकरणे द्रष्टव्यः । एवं पशुना यजेतेति विधिवाक्ये पशु-नेत्युपपदे समानाभिधानश्रुतिर्दर्शिता । अथ यजेतेत्याख्यातेऽपोयमस्तीत्युदाहरति—**यजेतेति** । **भावनाङ्गत्वमिति ।** अत्रापि विशेषणत्वरूपं गौणमङ्गत्वम् । समाना-भिधानश्रुतेरिति पञ्चमी । अत्रैव पदश्रुत्या अङ्गत्वं दर्शयति—**एकपदश्रुत्या चेति ।** आख्याताभिहितसंख्याया इत्यनुषङ्गेण बोध्यम् । अत्र तु मुख्यमेवाङ्गत्वम् ।

विभक्तासु तिसृषु विनियोजकश्रुतिषु तृतीयाया एकपदरूपाया उदाहरण-परस्यास्य एकपदेत्यादिग्रन्थस्य अनन्तदेवेन आख्यातस्य कर्तृवाचित्वेऽपि संख्याया यागाङ्गत्वमेवेत्येतदुपपादनपरतया कृतमवतरणमयुक्तमिति वेदितव्यम् । तदनुगुणं पदमपि नात्र किञ्चिदस्तीति । ननु प्रबलया समानाभिधानश्रुत्या भावनाङ्गत्वेनाव-धारितायाः संख्यायाः कथं दुर्बलया पदश्रुत्या यागाङ्गत्वमपि भवितुमर्हति । अन्यथा पशुनेत्यत्रापि कारकाङ्गत्वेनावधारितयोरेकत्वपुंस्त्वयोः पदश्रुत्या पश्वङ्गत्वमपि स्यादिति चेत् सत्यम् । आख्यातोपात्ता संख्या किं यागेऽन्वेति, उत भावनायामिति संशये समानाभिधानश्रुतेर्बलीयस्त्वाद् भावनायामेव अन्वेति । पशुयागकरणिका एकत्ववती भावना विधिविषय इति । एवं समानाभिधानश्रुत्या भावनायाः संख्यां प्रति विशेष्यत्वेऽपि अङ्गित्वं न भवति । न हि अर्थभावना अङ्गोपकारमपेक्षते, फलं प्रत्यकरणत्वात् । फलकरणभूतस्य यागस्य हि अङ्गापेक्षा । तस्माद् अन्वय-बोधने बाधितापि पदश्रुतिः पश्चाद् अङ्गत्वबोधने व्याप्रियत एवेति न तद्विषये पद-श्रुतेर्बाध इति । न च एकत्वपुंस्त्वयोरपि पश्चात् पश्वङ्गत्वं पदश्रुत्या स्यादिति वाच्यम् । एकस्मिन् करणकारके अन्वितानां पशोरेकत्वपुंस्त्वयोश्च परस्परमङ्गाङ्गि-भावे प्रमाणाभावादिति दिक् । अमूर्तायास्संख्यायाः कथं यागाङ्गत्वमिति नाशङ्क्यम् । आरुण्यवद् द्रव्यपरिच्छेदद्वारा तदुपपत्तेरित्याह—**न चेति** ।

अथात्रामूर्तत्वेन क्रियाङ्गत्वं नोपपद्यत इति न युक्तं वक्तुम् । अमूर्ताया अपि अवघातयागादिक्रियायास्तत्तदङ्गत्वदर्शनात् । न हि मूर्तिमत्यः क्रिया भवन्तीति चेदुच्यते । सिद्धत्वे सत्यमूर्तत्वस्य विवक्षितत्वात् । अङ्गानि हि सिद्धसाध्यभेदेन द्विविधानीति वक्ष्यते । तत्र क्रियारूपस्य साध्यस्य अमूर्तस्यापि पुरुषेणोत्पाद्यत्वात्

**भावनाङ्गत्वमिति वाच्यम्। कर्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्ता च आक्षेपलभ्यः। आख्यातेन हि भावनोच्यते। सा च कर्तारं विना अनुपपन्नेति।**

परोद्देशप्रवृत्तकृतिसाध्यत्वरूपाङ्गत्वस्य तत्र न काचिदनुपपत्तिः। सिद्धस्य तु दधि-सोमादेर्न पुरुषकृतिसाध्यत्वमिति न तद्रूपमङ्गत्वं सम्भवति; अपि तु होमाद्युद्देशेन उपादीयमानत्वेन पुरुषकृतिव्याप्यत्वात् तदङ्गत्वं भवति। इदन्तु उपादानविषयत्वम् आरुण्यादिगुणस्य सिद्धस्यामूर्तस्य च न सम्भवतीत्यङ्गत्वानुपपत्तिशङ्का युक्तेति।

अत्रेदं बोध्यम्—सर्वेषु गुणजातिविधिषु एवममूर्तत्वादङ्गत्वानुपपत्तिशङ्का, परि-च्छेदसाधनत्वात्तदुपपत्तिरिति परिहारश्च समानौ। तत्र 'तस्य द्वादशशतम्', 'एकादश-प्रयाजान्' इत्यादिषु अङ्गिन एव उद्देश्यस्य परिच्छेदः। क्रये यागे च तदङ्गद्रव्य-परिच्छेद इति विशेषः। तत्र प्रकृते आरुण्यस्य क्रयेऽसम्भवात् तदङ्गद्रव्यपरिच्छेद-कत्वावश्यम्भावेऽपि आख्यातोपात्ताया एकत्वसंख्यायाः साक्षादङ्गभूतयागपरिच्छेद-कत्वस्य 'तिस्र आहुतीः' इत्यादाविव सम्भवात् तदङ्गकर्तृपरिच्छेदकत्वं कथमुच्यत इति यद्यपि शङ्का जायते। तथाप्यनेन कर्त्राख्यातेनोपात्तायाः संख्यायां कर्त्रितर-परिच्छेदकत्वस्याव्युत्पन्नत्वात्तथा न भवतीति।

ननु आरुण्यस्य परिच्छेद्याकाङ्क्षायां तस्मिन्नेव वाक्ये क्रयाङ्गभूतस्य गोद्रव्यस्य एकहायनीपदेन उपस्थितत्वात्तत्परिच्छेदकत्वं सिद्ध्यति। अत्र तु यागाङ्गभूतस्य कर्तुरनुपात्तत्वात् संख्याया न तत्परिच्छेदकत्वलाभः। न हि पशुनेति पदेन कर्तुरुप-स्थितिः शक्यशङ्का। यजेतेत्यत्रापि प्रकृत्या यागस्य, प्रत्ययेन च आख्यातत्वेन अर्थभावनायाः, लिङ्त्वेन शब्दभावनायाः, एकवचनत्वेन एकत्वसंख्यायाश्चोपस्थिति-रिति कर्तुरुपस्थापकं न किञ्चिदत्र वर्तते। तस्मात् कर्तृपरिच्छेदद्वारा यागाङ्ग-त्वोपपादनमनुपपन्नमित्यत्राह—**कर्ता चेति।** शब्दनिष्ठशक्तिलक्षणावद् अर्थनिष्ठः अर्थान्तरोपस्थापनशक्तिविशेष आक्षेपस्तेनोपस्थित इत्यर्थः। कस्तर्हि अर्थः? अत्र कर्तु-राक्षेपक इत्याशङ्कायाम् आक्षेपकमर्थं वदन् तस्याक्षेपकत्वमुपपादयति—**आख्यातेन हीति।** आख्यातेनोच्यमाना भावना कर्तुराक्षेपिका। पुरुषमन्तरा प्रवृत्तिरूपाया भावनाया अनुपपन्नत्वात् तस्याः कर्त्राक्षेपकत्वमवश्यम्भावीत्यर्थः। तथा च पश्वादिविशिष्ट-यागकरणिका एकत्ववती यत्किञ्चित्कर्तृका भावना विधिविषय इति बोधाद् आरुण्यस्य एकहायनीपरिच्छेदकत्ववद् एकत्वस्य कर्तृपरिच्छेदकत्वं सुलभमिति भावः। अनुपपन्नेति कर्ताऽऽक्षेपलभ्य इत्यन्वयः। अत्राप्यनन्तदेवकृतमवतरणम-समीचीनमिति वेदितव्यम्।

**बहुज्ञत्वप्रकटनकौतूहलवशंवदः।**
**बुधोऽपि ग्रन्थपङ्क्तीनां भावेषु स्थूलदर्शनः॥**

**सेयं श्रुतिर्लिङ्गादिभ्यः प्रबला। लिङ्गादिषु न प्रत्यक्षो विनियोजकः शब्दोऽस्ति; किन्तु कल्प्यः। यावच्च तैर्विनियोजकः कल्प्यते तावत् प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तेर्व्याहतत्वात्। अत एव ऐन्द्र्या लिङ्गान्नेन्द्रोपस्थानार्थत्वम्; किन्तु ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या गार्हपत्योपस्थानार्थत्वम्।**

**शब्दसामर्थ्यं लिङ्गम्। यथाऽऽहुः — 'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते'। सामर्थ्यं रूढिरेव। तेन समाख्यातो नाभेदः। यौगिक-**

---

एवं निरूपिताया अङ्गत्वप्रमाणभूतायाः श्रुतेस्सति विरोधे लिङ्गादिभ्यः पञ्चभ्यः प्रमाणान्तरेभ्यः प्राबल्यमाह—**सेयमिति**। सा शास्त्रप्रसिद्धा। इयं उक्तविधा। प्राबल्ये हेतुमाह—**लिङ्गादिष्विति**। **व्याहतत्वादिति**। प्रबलेति पूर्वेणान्वयः। तेषां लिङ्गादीनां कल्पकत्वशक्तेः अङ्गत्वबोधकश्रुतिकल्पनसामर्थ्यस्य। लिङ्गविरोधे श्रुतिप्राबल्यमुदाहरति—**अत एवेति**। श्रुतेरितरापेक्षया प्राबल्यादेवेत्यर्थः। **द्वितीयाश्रुत्येति**। ऐन्द्र्येति तृतीयाश्रुत्या चेति बोध्यम्। अत्र सर्वत्र विस्तरोऽक्षरार्थे। यद्यपि षडपि प्रमाणानि निरूप्य तदनन्तरं मूलग्रन्थरीत्या बलाबलविचारनिरूपणं युक्तम्। न हि लिङ्गादिकमजानतस्तेन सह श्रुतेर्विरोधप्राबल्यादिविचारो युज्यते। तथापि तत्तत्प्रमाणनिरूपणान्ते तस्य तस्य इतरापेक्षया विद्यमानस्य प्राबल्यस्य कथने लाघवमित्यभिमानेन एवं क्रियत इति द्रष्टव्यम्।

लिङ्गं निरूपयति—**शब्देति**। शब्दस्य सामर्थ्यं अर्थबोधनानुकूला शक्तिः। यद्यप्यत्र सामर्थ्यं लिङ्गमित्येतावन्मात्रं वक्तव्यम्। अत एव आपदेवादिभिः एवमेवोच्यते। अन्यथा अर्थगतसामर्थ्यरूपस्य लिङ्गस्यासङ्ग्रहापत्तेः। अत एव चात्र, आपदेवादिभिः 'सामर्थ्यं सर्वभावानां लिङ्गम्' इत्युदाहृतस्य श्लोकस्य सर्वशब्दानामिति पाठान्तरेणोदाहरणमप्यसङ्गतम्। तथापि शब्दसामर्थ्यरूपत्वेनेह लिङ्गं व्याचक्षाणस्य ग्रन्थकारस्यायमाशयः। सत्यं वस्तुतो लिङ्गं द्विविधम्—शब्दगतम् अर्थगतञ्चेति। तथाऽप्यर्थगतस्य सूत्रकारेण 'अर्थाद्वा कल्पनैकदेशत्वात्' इति प्रथमाध्याये निरूपितत्वात् शब्दगतमात्रस्य च 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्' इति तृतीयेऽङ्गाध्याये निरूपितत्वाद् अस्माभिरपि तदनुसारेण शब्दगतमात्रमिहाङ्गप्रस्तावे वक्तुमुचितम्, नान्यदिति। तदत्रार्थगतस्य सामर्थ्यस्य लिङ्गत्वं ग्रन्थकारानभिमतमिति न मन्तव्यम्। तथा च सोमनाथग्रन्थः— 'मन्त्राधिकरणसिद्धं लिङ्गस्य विनियोजकत्वमित्युक्ते

**शब्दसमाख्यातो रूढ्यात्मकलिङ्गशब्दस्य भिन्नत्वात्। तेन बर्हिर्देवसदनं दामीति मन्त्रस्य कुशलवनाङ्गत्वम्, न तूलपादिलवनाङ्गत्वम्। तस्य बर्हिर्दामीति लिङ्गात्तल्लवनं प्रकाशयितुं समर्थत्वात्। एवमन्य-**

---

मन्त्राधिकरणेऽर्थप्रकाशनसामर्थ्यस्य शब्दगतस्य विनियोजकत्वसिद्धेः शब्दसामर्थ्यमेव लिङ्गमिति भ्रमः स्यात्। तद्व्युदासार्थमाह—**लिङ्गं सामर्थ्यमिति**। शब्दार्थोभयसाधारण्येन सामर्थ्यमात्रमेव लिङ्गम्। तथाप्यत्र क्रियमाणविशेषविचारस्य शब्दसामर्थ्यरूपलिङ्गविनियोगविशेषरूपत्वात् तदुपयुक्ततया शब्दगतस्य सामर्थ्यस्य विनियोजकत्वं मन्त्राधिकरणे सिद्धमित्युक्तम्। न तु तावता तदेव लिङ्गमिति भ्रमः कर्तव्य इति भावः। अर्थसामर्थ्यरूपस्य च लिङ्गस्य विनियोजकत्वं अर्थाद्वा कल्पनेत्यधिकरणे वर्णितम्' इति।

ननु शब्दसामर्थ्यं लिङ्गं तर्हि वक्ष्यमाणायाः समाख्याया अस्य लिङ्गस्य भेदो न भवति। समाख्या हि वाचकशब्द एव। वाचक इति च अर्थबोधनानुकूलसामर्थ्यवानुच्यते। तथा च शब्दनिष्ठं सामर्थ्यं लिङ्गं सामर्थ्यवान् शब्दस्समाख्येत्युक्ते विशेषणविशेष्यभावविपर्यासमन्तरा न कश्चिद्वस्तुतो भेदो दृश्यत इत्याशङ्क्याह—**सामर्थ्यं रूढिरेवेति**। एवकारेण योगो व्यवच्छिद्यते। समुदायशक्तिः रूढिः। अवयवशक्तिर्योगः। **तेनेति**। शब्दसामर्थ्यमिति सामर्थ्यस्य रूढिमात्ररूपत्वस्य विवक्षितत्वादित्यर्थः। अभेदाभावमेवोपपादयति **यौगिकेति**। यौगिकशब्दरूपायाः समाख्याया इत्यर्थः। **रूढेति**। रूढ्यात्मकं लिङ्गं तद्वान् शब्दः रूढ्यात्मकलिङ्गशब्द इति। नन्वेवमपि अभिधात्रीश्रुतेर्लिङ्गस्य भेदो न स्यात्। व्रीह्यादिपदानां रूढशब्दत्वादिति चेत्, न, शब्दसामर्थ्यमित्यत्र मन्त्रशब्दस्य विवक्षितत्वात्। वस्तुतस्तु लिङ्गभूतस्य शब्दसामर्थ्यस्य रूढिरूपत्वनियमो नास्ति। 'स्योनन्ते सदनं कृणोमि' इत्यत्र सदनशब्दस्य षद्लृ-धातोरधिकरणल्युटा निष्पन्नस्य पाचकादिपदवद् यौगिकत्वेन रूढ्यभावात्। एवं हविष्कृदेहीत्यादावपि। तस्मादङ्गभूतशब्दनिष्ठम् अङ्गिबोधनानुकूलसामर्थ्यं योगरूपं रूढिरूपं वा लिङ्गम्; अङ्गभूतो योऽर्थः अध्वर्य्वादिस्तद्बोधनानुकूलसामर्थ्यवान् यौगिकशब्द आध्वर्यवादिः समाख्येति भेदो बोध्यः। लिङ्गकृतमङ्गत्वमुदाहरति—**तेनेति**। लिङ्गेनेत्यर्थः। **कुशेति**। कुशानां बर्हिषां लवनं तदङ्गत्वमिति। कुशलवनाङ्गत्व लिङ्गबलादेवेत्येतद् द्रढयितुं लिङ्गाभावेनान्याङ्गत्वं नास्तीत्याह—**न त्विति**। उलपाः तृणविशेषा यज्ञेऽपि बर्हिर्वदुपयुक्ताः। कुशलवने अस्य मन्त्रस्य लिङ्गसत्त्वमुपपादयति—**तस्येति**। उक्तस्य मन्त्रस्येत्यर्थः। बर्हिःपदस्य कुशप्रकाशनसामर्थ्यं दामीति पदस्य लवनप्रकाशनसामर्थ्यमित्युभयोपादानम्। तल्लवनं कुशलवनम्। **समर्थत्वादिति**। एतेनैवोलपादिलवनं प्रकाशयितुमसमर्थत्वादित्यप्युक्तं वेदितव्यम्। आप-

**त्रापि लिङ्गाद्विनियोगो द्रष्टव्यः । तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । अत एव 'स्योनन्ते सदनं कृणोमि' इति मन्त्रस्य पुरोडाशसदनकरणाङ्गत्वम्, सदनं कृणोमीति लिङ्गात्, न तु वाक्यात्सादनाङ्गत्वम् ।**

**समभिव्याहारो वाक्यम् । समभिव्याहारश्च साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि वस्तुतः शेषशेषिवाचकपदयोः सहोच्चारणम् । यथा**

---

देवीये पूषानुमन्त्रणमन्त्राणामपि लिङ्गाद्विनियोगः प्रदर्शितः । स इह विस्तरभयान्न प्रदर्श्यते । तत्रैव त्वनुसन्धेय इत्यभिप्रेत्याह—**एवमिति** । अन्यत्रापि पूषानुमन्त्रणमन्त्रादावपीत्यर्थः ।

ननु आपदेवेन 'तच्च लिङ्गं द्विविधं सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं तदनपेक्षञ्चेति । आद्यं बर्हिर्देवसदनं दामीति मन्त्रः, पूषानुमन्त्रणमन्त्रा इत्येवमादेर्विनियोजकम् । द्वितीयम् अर्थज्ञानस्य कर्मानुष्ठाने विनियोजकम्' इति निरूपणाद् अत्रापि ग्रन्थकारेण प्रथमं बर्हिर्मन्त्रस्य लिङ्गेन विनियोगे उक्ते अर्थज्ञानस्य कर्मानुष्ठानविनियोग एव एवमन्यत्रापीत्यत्राभिसंहित इति युक्तम् । अन्यत्रापि अर्थज्ञानादावपीत्यर्थादिति चेत्, न । आपदेवेन हि शब्दगतार्थगतोभयलिङ्गसाधारण्येन सामर्थ्यं लिङ्गमिति प्रथमं लक्षितत्वाद् अर्थज्ञानरूपवस्तुगतसामर्थ्यस्याप्युदाहरणं तत्र युज्यते । अत्र तु शब्दगतसामर्थ्यस्यैव लिङ्गत्वेन विवक्षितत्वात् अर्थगतनिरूपणस्याविवक्षितत्वात् तदुदाहरणाभिप्रायो नोपपद्यत इति । ननु आपदेवस्याप्यर्थगतसामर्थ्यनिरूपणमविवक्षितमेव । न च कथं तर्हि लिङ्गस्य द्वेधा विभाग इति वाच्यम् । मिश्रैर्लिङ्गक्रमसमाख्यानाधिकरणे एवं लिङ्गविभागस्य दर्शितत्वात् तदनुयायिनाऽऽपदेवेन एवं विभागः क्रियते । तत्र यद्यप्यर्थज्ञानमर्थ एव न शब्दः, तथापि तद्गतं लिङ्गमर्थगतलिङ्गत्वेन नापदेवस्य विवक्षितम् । सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं तदनपेक्षं चेत्यन्यथैव विभागकरणात् । अन्यथा हि शब्दगतमर्थगतञ्चेत्येव विभागमकरिष्यत् । एवमकरणात्त्वेतद्ग्रन्थकारवदेव प्रथमाध्यायान्ते निरूपितस्यार्थगतसामर्थ्यस्य इह निरूपणे तात्पर्याभावोऽवसीयत इति चेत्, नैतदेवम् । आपदेवकृतविभागोऽपि शब्दगतमर्थगतं चेति विभागतुल्य एवेति परिष्कार एवेदं सङ्ग्रहेणोक्तमिति न दूरं गम्यते ।

लिङ्गस्य तदुत्तरप्रमाणेभ्यः प्राबल्यमुक्त्वा वाक्यात्प्राबल्यमुदाहरति—**तदिदमिति** । **कृणोमीति** तैत्तिरीया अधीयते ।

वाक्यं लक्षयति—**समभिव्याहार** इति । ननु समभिव्याहारो नाम सहोच्चारणम् । कयोरिह सहोच्चारणं विवक्षितम् । अपि च श्रुत्युदाहरणत्वेनोदाहृतेष्वपि वाक्येषु

**यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति । अत्र पर्णताजुह्वोः समभिव्याहारादेव पर्णताया जुह्वङ्गत्वम् । न चानर्थक्यम्, अन्यथाऽपि जुह्वाः सिद्धत्वादिति वाच्यम् । जुहूशब्देन तत्साध्यापूर्वलक्षणात् । तथा च वाक्यार्थः—पर्णतयाऽवत्तहविर्धारणद्वारा जुह्वपूर्वं भावयेदिति । एवं**

---

समभिव्याहारस्य विद्यमानत्वादतिव्याप्तिरित्यत्राह–**समभिव्याहारश्चेति** । द्वितीयादि-श्रुतिरहितत्वे सति शेषशेषिवाचकपदसहोच्चारणं वाक्यमिति निष्कर्षः । सत्यन्तेन उक्तातिव्याप्तिर्वारिता । प्रयाजशेषेण हवींष्यभिघारयति सक्तून् जुहोतीत्यादौ विद्य-मानाऽपि द्वितीयादिविभक्तिर्न श्रुतिः । तृतीयायाः कर्मत्वे द्वितीयायाः करणत्वे च लाक्षणिकत्वात् । शक्यार्थपराया एव विभक्तेः श्रुतित्वात्; किन्तु तत्र वाक्यादेवाङ्गत्वम् । तथा च तत्र द्वितीयादिरहितत्वाभावादव्याप्तिः स्यादिति साध्यत्वादिवाचकेति विभक्ति-विशेषणम् । शक्यार्थपरेत्यर्थः । वाचकं शक्तम् । **शेषेति** । शेषशेषिणोर्वाचिके पदे । तयोः शेषत्वेन शेषित्वेन च वाचकत्वासम्भवात् । **वस्तुत** इति । यावर्थौ वस्तुतः शेष-शेषिणौ न तु तथा प्रतीयमानौ द्वितीयाद्यभावात् तद्वाचकेति ।

वाक्यकृतमङ्गत्वमुदाहरति—**यथेति** । पर्णताजुह्वोस्तद्वाचकयोः पर्णमयीजुहू-पदयोरित्यर्थः । समभिव्याहारादेव न तु द्वितीयादिविभक्त्या । **पर्णतायाः** इति । न च पर्णमयीशब्देन पर्णवृक्षविकारस्योक्तत्वात् कथं पर्णतारूपजातिमात्रस्येह प्रतिपादनं क्रियत इति चेदुच्यते । जुह्वादिपात्राणां दारुमयत्वाद् यत्किञ्चिद्वृक्षविकारत्वस्य सामान्येनावगतत्वात् किञ्जातीयस्य वृक्षस्यायं विकार इति जातिमात्रस्य जिज्ञासि-तत्वात् तात्पर्यगत्या पर्णतामात्रस्यात्र प्रतिपादनमिति । एवं सर्वेष्वङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यमिति यत् पूर्वमुक्तं तदत्र शङ्कापरिहारव्याजेन दर्शयति—**न चेति** । आनर्थक्यं पर्णताया निष्फलत्वम् । अन्यथाऽपि पर्णतां विनाऽपि । अन्यजातीयवृक्षोपादानेनापीत्यर्थः । सिद्धत्वात् निष्पादनसम्भवात् । एवं नैष्फल्यं कण्ठरवेणोक्तम् । इत्थमन्यथाऽपि सिद्ध्यन्त्या जुह्वाः प्रयोजनत्वाभावे तदुद्देश्यकत्वावगाही बोधोऽस्मिन् पर्णमयी जुहूरिति वाक्ये न सम्भवतीतीदं विधिवाक्यमबोधकमित्यपि पूर्वपक्षिणो हृदये स्थितम् । जुहूपद-शक्यार्थस्य नात्र उद्देश्यत्वमिष्यते येनोक्ता सर्वानुपपत्तिः स्यात् ; किन्तु तेन प्रयोजनी-भवितुं योग्यमपूर्वं लक्ष्यते । तेन न काचिदनुपपत्तिरित्यभिप्रेत्याह—**जुहूशब्देनेति । अपूर्वलक्षणाद्** अपूर्वस्य लक्षणया प्रतिपादनादुक्तानुपपत्तिपरिहारादिति । न च वाच्य-मित्यन्वयः । तत्र प्रथमं वाक्यार्थबोधानुपपत्तिर्नास्तीत्यभिप्रेत्य तं दर्शयति—**तथा चेति** । तदयमित्यापदेवीयपाठ एवायं प्रमादादन्यथा कृत इति प्रतीमः । **जुह्वपूर्वमिति ।** जुहूसाध्यमपूर्वमित्यर्थः । वैपरीत्येन अपूर्वसाधनीभूतपात्रमित्यत्रैव तात्पर्यं बोध्यम् । **अवत्तेति** । इदम् अवत्तहविर्धारणरूपं द्वारं जुह्वा एवापूर्वोत्पादने इति वेदितव्यम्, न तु

**च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यत इति न पर्णताया वैयर्थ्यम्। अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्। अन्यथा स्रुवादिष्वपि पर्णतापत्तेः।**

**सेयमनारभ्याधीताऽपि पर्णता सर्वप्रकृतिष्वेवान्वेति न विकृतिषु। तत्र चोदकेनापि तत्प्राप्तिसम्भवात् पौनरुक्त्यापत्तेः। यत्र समग्राङ्गोपदेशः सा प्रकृतिः। यथा दर्शपूर्णमासादिः। तत्प्रकरणे सर्वाङ्गपाठात्।**

---

तु यथाश्रुतेन पर्णतया जुह्वपूर्वसाधने। अत एव पर्णतया अवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदित्यापदेवीयस्य बहुरमणीयस्य पाठस्य विनाशेन कृतमिमं पाठं वाक्यव्युत्पत्तिशालिनो न रोचयन्ते। एवमपूर्वस्योद्देश्यत्वे सति पर्णताया आनर्थक्यं नास्तीत्याह—**एवं चेति।** उद्देश्यकोटौ द्वारविवक्षायाः प्रयोजनं वदन्नाह—**अवत्तेति।** अवत्तम् अवदानेन संस्कृतं हविस्तस्य धारणम्। अवत्तं हि हविः जुह्वां निधाय होमः क्रियत इति। अन्यथा द्वारमविवक्षित्वा अपूर्वसाधनीभूतं पात्रं पर्णतया भावयेदित्येवोद्देश्याङ्गीकारे। **स्रुवेति।** जुहूः उपभृत् ध्रुवा एषां त्रयाणां पात्राणां स्रुगिति नाम। येन उपभृतो ध्रुवायाश्च होमायाज्यं उद्ध्रियते तस्य पात्रान्तरस्य स्रुव इति नाम।

एवं जुहूपदलक्षितमुद्देश्यकोटिप्रविष्टमपूर्वं कस्य यागस्येति विचारे यस्य यागस्य जुहूरङ्गं तस्य यागस्येति वक्तव्यम्। जुहूश्च उपदेशेन दर्शपूर्णमासयोरतिदेशेन दर्शपूर्णमासविकृतीनां सौर्यादीनां चाङ्गं भवति। तत्र किं प्रकृतिभूतदर्शपूर्णमासापूर्वं विकृति भूतसौर्याद्यपूर्वमिति सर्वमुद्देश्यकोटिप्रविष्टम्, आहोस्वित् प्रकृतिभूतदर्शपूर्णमासमात्रमितिसंशये सर्वमपूर्वमिति पूर्वपक्षं कृत्वा प्रकृतिभूतदर्शपूर्वमात्रमिति कस्मिंश्चिदधिकरणे सिद्धान्तितम्। प्रसङ्गात्तदाह—**सेयमिति। अनारभ्याधीतापीति।** कर्मविशेषमप्रकृत्येत्यर्थः। अनेन पूर्वपक्षयुक्तिरुच्यते। यदाग्नेयोऽष्टाकपाल इति प्रक्रम्य व्रीहीनवहन्तीति विधानाद्धि आग्नेयापूर्वमात्रसम्बन्धिव्रीह्यर्थत्वमवघातस्य सिद्ध्यति, न सौर्यादिव्रीह्यर्थत्वम्। अत्र तु दर्शपूर्णमासयोरनुपक्रमात् सर्वयागसम्बन्धिजुह्वर्थत्वं पर्णताया भवतीत्याशयः। **सर्वप्रकृतिषु** आग्नेयादिषु षट्सु गृहमेधीयादौ च। एतदपूर्वसाधनत्वविशिष्टजुह्वामेवेत्यर्थोऽन्वेति, यस्य पर्णमयी जुहूरिति वाक्येन विधीयत इत्यर्थः। पूर्वपक्षं निरस्यति—**न विकृतिष्विति।** न विकृतिष्वपीत्यर्थः। अत्र युक्तिमाह—**तत्रेति।** तत्र विकृतिषु। चोदकोऽतिदेशः। **तत्प्राप्तीति।** पर्णताप्राप्तीत्यर्थः। पौनरुक्त्यापत्तेः द्विर्विधानापत्तेः।

अयं भावः—दर्शपूर्णमासयोरुपदिष्टा जुहूः अतिदेशेन सौर्यादिषु प्राप्नोतीति तावत् स्थितम्। तत्र यदि पर्णमयीवाक्ये प्रकृतिविकृतिसर्वापूर्वसाधनीभूतजुहूद्देशेन पर्णता विधीयते तदाऽनेन वाक्येन दर्शपूर्णमासयोरिव सौर्यादिष्वपि

**यत्र न सर्वाङ्गोपदेशः सा विकृतिः। यथा सौर्यादिः। तत्र कतिपयाङ्गानामतिदेशेन प्राप्तत्वात्। अनारभ्याधीतविधिः सामान्यविधिः। तदिदं वाक्यं प्रकरणादिभ्यो बलवत्। अत एव इन्द्राग्नो इदं हविरित्यादेरेकवाक्यत्वाद् दर्शाङ्गत्वम् न तु प्रकरणाद् दर्शपूर्णमासाङ्गत्वम्।**

**उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु समिधो यजतीत्यादिवाक्ये फलविशेषस्य अनिर्देशात् समिद्यागेन भावयेदिति बोधानन्तरं**

---

उपदेशादेव पर्णता प्राप्यते। पुनश्च सौर्यादिषु विकृतिषु जुह्वादिप्रापणाय प्रवृत्तोऽतिदेशः जुहूमिव तदङ्गभूतां पर्णतामपि प्रापयतीति उपदेशातिदेशाभ्यां पर्णताया विकृतिषु द्विविधानापत्तिः। न चैकस्य द्विविधानं युज्यते। प्रकृत्यपूर्वसाधनीभूतजुहूमात्रोद्देशेन पर्णताविध्यङ्गीकारे तु पर्णताया उपदेशाद् दर्शपूर्णमासमात्राङ्गत्वम् अतिदेशात् सौर्याद्यङ्गत्वमिति न स दोष इति। प्रकृतिशब्दस्य प्रकृते विवक्षितमर्थमाह—**यत्रेति**। यस्मिन् कर्मणि अन्यस्मात्कर्मणोऽङ्गानि नानीयन्ते सा प्रकृतिरित्यत्रैव तात्पर्यम्। प्रकृतिशब्दस्य मुख्यार्थस्तु यस्याङ्गानि अन्यत्रातिदिश्यन्ते तत्कर्म। विकृतिं लक्षयति—**यत्र नेति**। सर्वाङ्गोपदेशाभावमुपपादयति—**तत्रेति**।

ननु कोऽनारभ्य विधिस्तत्राह—**अनारभ्येति**। सामान्येन विधिः सामान्यविधिः। दर्शपूर्णमासीयत्वादिना विशेषणमन्तरा अपूर्वसामान्यसाधनीभूतपात्रत्वावच्छिन्नोद्देशेन पर्णतादिविधायके विधिरित्यर्थः। वस्तुतस्तु प्रामादिकोऽयमत्र एतद्ग्रन्थपाठः। आपदेवीये हि पर्णतान्यायापवादेन अनारभ्याधीतं साप्तदश्यं विकृतिष्वेव गच्छतीति प्रदर्श्य तदर्थमुपसंहारमुक्त्वा तत्रोपष्टम्भकतया 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति वार्तिकमुदाहृत्य इमं वार्तिकन्यायं प्रकृते योजयितुमुक्तम्—अनारभ्यविधिः, सामान्यविधिः, मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरिति, न तु अनारभ्यविधेर्लक्षणमुक्तम्—सामान्यविधिरिति। न चात्र सामान्यविधेर्विशेषे उपसंहार उच्यते। तस्मादत्रायं ग्रन्थोऽनन्वित इति बोध्यम्। वार्तिके विशेषत इति विशेषविधिनेत्यर्थः। वाक्यस्य स्वानन्तरप्रमाणेभ्यः प्राबल्यमुक्त्वा उदाहरति—**तदिदमिति। इन्द्रेति।** अत्र इन्द्राग्नी इति पदं विना पाठः श्रेयान्। अथवा आपदेवीये स्थितेन पाठेन भवितव्यम्।

प्रकरणं दर्शयति—**उभयेति**। उभयस्य उभयी वा आकाङ्क्षा उभयाकाङ्क्षा। अङ्गस्य भाव्याकाङ्क्षां दर्शयति—**प्रयाजादिष्विति।** अङ्गिनः कथम्भावाकाङ्क्षां दर्शयति—**दर्शेति**। प्रकरणं विभजते—**तच्चेति**। आद्यं निरूपयति—**मुख्येति**। मुख्यम् अङ्गि, तस्यभावना तत्सम्बन्धि यत्प्रकरणं तन्महाप्रकरणमित्यर्थः। फलवद्यागाद्यन्वयिभावनासम्बन्धीतिकर्तव्यताकाक्षाघटितोभयाकाङ्क्षारूपं प्रकरणं महाप्रकरणमित्युक्तं

**किमित्युपकार्याकाङ्क्षा । दर्शपूर्णमासादिवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति बोधानन्तरं कथमित्युपकारकाकाङ्क्षा । इत्थं च उभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । तच्च प्रकरणं द्विविधम् । महाप्रकरणमवान्तरप्रकरणं चेति । तत्र मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणम् । तेन च प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । एतच्च प्रकृतावेव । उभयाकाङ्क्षायाः सम्भवात्, न तु विकृतौ । तत्र प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशेन कथंभावाकाङ्क्षाया उपशमेन अपूर्वाङ्गानामप्युभयाकाङ्क्षया विनियोगासम्भवात् । तस्मादपूर्वाङ्गानां स्थानादेव विकृत्यर्थत्वमिति ।**

---

भवति । इदमुदाहरन् उक्तं प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं महाप्रकरणेनैवेत्याह—**तेन चेति** । दर्शपूर्णमासौ हि स्वर्गरूपफलवत्त्वादङ्गिनौ । तेन तदन्वितभावनासम्बन्धीतिकर्तव्यताकाङ्क्षाघटितत्वादत्राङ्गत्वबोधकं प्रकरणं महाप्रकरणमित्यर्थः । महाप्रकरणगतं विशेषमाह—**एतच्चेति** । एवकारं विवृणोति—**न त्विति** । अत्र हेतुमुभयाकाङ्क्षाया असम्भवमुपपादयति—**तत्रेति** । विकृतावित्यर्थः । उभयाकाङ्क्षाया असम्भवे हेतुः कथम्भावाकाङ्क्षोपशम उपशमकारणम् अतिदेशः अतिदेशस्वरूपं प्रकृतिवद्विकृतिः कर्तव्येति ।

ननु विकृतिषु द्वेधाऽङ्गानि भवन्ति कानिचिदतिदिश्यमानानि कानिचिदुपदिश्यमानानीति । उपदिश्यमानान्येव अपूर्वाङ्गानीत्युच्यन्ते । तत्र केषां विषये प्रकरणं नास्तीत्युच्यते । यद्यतिदिश्यमानविषये तर्हि इष्टापत्तिः । प्राकृताङ्गभावनानां प्रकृत्यन्वयादेव भाव्याकाङ्क्षायाः शान्तत्वात् । यद्यपूर्वाङ्गविषये तन्नोपपद्यते । अपूर्वाङ्गभावनानां भाव्याकाङ्क्षाया अशान्तत्वात् । विकृतिभावनाया अपि कथम्भावाकाङ्क्षायाः सद्भावादिति पूर्वपक्षं सूचयता उक्तम्—**अपूर्वाङ्गानामपीति** । कल्प्योपकारापूर्वाङ्गविषयम् उपदेशमपेक्ष्य क्लृप्तोपकारप्राकृताङ्गविषयोऽतिदेशः प्रबलत्वात् प्रथमं प्रवृत्तविकृतेः कथम्भावाकाङ्क्षां शमयतीति अपूर्वाङ्गविषये विकृतेः कथम्भावाकाङ्क्षाया अभावान्न तद्विषयेऽपि उभयाकाङ्क्षासम्भव इति समाधानमतिदेशेन कथम्भावाकाङ्क्षाया उपशमेनेत्यत्रैवाभिसंहितम् । तर्हि अपूर्वाङ्गानां विकृत्यङ्गत्वं केन प्रमाणेनेत्यत्राह—**तस्माविति** । स्थानं वक्ष्यते ।

**अङ्गभावनासम्बन्धिप्रकरणं अवान्तरप्रकरणम्। तेन च अभिक्रमणादीनां प्रयाजाद्यङ्गत्वम्। तच्च सन्दंशेनैव ज्ञायते। तदभावे चाविशेषात् सर्वेषां फलभावनाकथम्भावेन ग्रहणप्रसङ्गेन प्रधानाङ्गत्वापत्तेः। एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वं सन्दंशः। यथाऽभिक्रमणे। तद्धि समानयते जुह्वामुपभृतस्तेजो वा इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधाय विधीयते यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान् नुदतेऽभिक्रामं जुहोत्यभिजित्यै इति। तदनन्तरं यो वै प्रयाजानां मिथुनं वेदेत्यादिना**

---

अवान्तरप्रकरणं निरूपयति—**अङ्गेति**। अङ्गभावनासम्बन्धीतिकर्तव्यताकाङ्क्षाघटितोभयाकाङ्क्षाऽवान्तरप्रकरणमित्यर्थः। तेन कृतमङ्गत्वं उदाहरति—**तेन चेति**। ननु यद्यङ्गभावनानामपि प्रकरणमस्ति तर्हि प्रयाजादीनां अनूयाजादिकमप्यङ्गं स्यात्। आग्नेयादिप्रधानभावनानामिव प्रयाजाद्यङ्गभावनानामपि प्रकरणसत्त्वात्। यदि त्वेवम् आग्नेयादिफलवत्प्रधानयागप्रकरणपठितानामेषां परस्परमङ्गाङ्गिभावो न भवतीत्युच्यते तर्हि अभिक्रमणमपि प्रयाजाङ्गं न स्यात्। अथात्रास्ति विशेष इति चेत् तर्हि स उच्यतामित्यत्राह—**तच्चेति**। अवान्तरप्रकरणं चेत्यर्थः। फलवत्प्रधानयागप्रकरणपठितानामङ्गभावनानां परस्पराङ्गाङ्गिभावबोधकं प्रकरणरूपं प्रमाणं न भवतीत्युत्सर्गः। यत्र तु सन्दंशोऽस्ति तत्र तस्याङ्गस्य अङ्गान्तरबोधकतया प्रकरणं भवत्येवेत्यपवादः। तथा च प्रयाजेषु सन्दंशसत्त्वात् प्रकरणमस्तीति ज्ञायते। तेनाभिक्रमणं प्रयाजाङ्गं भवति। अनूयाजादिविषये तु सन्दंशो नास्तीति न प्रकरणं न तरां न तदङ्गत्वम्; किन्तु प्रयाजवदेव प्रधानयागप्रकरणात्प्रधानाङ्गत्वमेवेति भावः। एवं सन्दंशाभावे उत्सर्गप्राप्तं यागाङ्गत्वमेवाभिक्रमणस्यापि स्यादित्यभिप्रेत्याह—**तदभाव इति**। सन्दंशाभाव इत्यर्थः। अविशेषात् प्रयाजादि प्रधानाङ्गम् अभिक्रमणादि तु तस्याङ्गस्याङ्गमिति प्रमाणविशेषाभावादित्यर्थः। फलभावनाकथम्भावेन प्रधानभावनेतिकर्तव्यताकाङ्क्षया ग्रहणप्रसङ्गेन विषयीकरणप्रसङ्गेन। ननु कः सन्दंशो नाम तदाह—**एकेति**। वाक्यान्तरेण विहितमङ्गमनूद्य वाक्यान्तरेण तत्र किञ्चिदङ्गं विधातव्यम्। पुनरपि तदेवाङ्गमनूद्य उत्तरत्र वाक्यान्तरेण किञ्चिदङ्गं विधातव्यम्। अनयोर्वाक्ययोर्मध्ये उभयत्रोद्देश्यत्वेन अनूदितस्याङ्गस्यानुवादमन्तरा किञ्चिदङ्गं विधातव्यम्। तत्र सन्दंश इत्यर्थः। सोऽयं सन्दंशोऽभिक्रमणेऽस्तीत्याह—**यथेति**। उपपादयति—**तत्र हीति**। **समानयत इति**। उपभृति स्थितमाज्यं जुह्वामानयतीत्यर्थः। **अत इति**। उक्तरीत्या सन्दंशस्य सत्त्वात् तेन चावान्तरप्रकरणस्य प्रतीयमानत्वादित्यर्थः। **प्रयाजाङ्गेति**। प्रयाजाङ्गयोर्मध्य इत्यर्थः।

**किञ्चिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये विहितमभिक्रमणं तदङ्गम्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदिति ज्ञाते कथमेभिरपूर्वं कर्तव्यमिति कथम्भावाकाङ्क्षायाः सत्त्वात्। सा च सन्दंशपठितैरभिक्रमणादिभिः शाम्यति। न चाङ्गभावनायाः कथम्भावाकाङ्क्षाभावः। भावनासामान्येन तत्रापि तत्सम्भवात्।**

**तदिदं प्रकरणं क्रियाया एव साक्षाद्विनियोजकम्। द्रव्यगुणयोस्तु तद्द्वारा। तथा हि—'यजेत स्वर्गकामः' इत्यत्र फलभावनायां कथम्भावाकाङ्क्षायां सन्निधिपठिताश्रूयमाणफलकं क्रियाजातमुपकार्याकाङ्क्षया इति-**

---

नन्ववान्तरमपि प्रकरणमुभयाकाङ्क्षारूपमेव। तत्राभिक्रमणादेर्भाव्याकाङ्क्षायां सत्यामपि प्रयाजादेरन्याङ्गत्वाद् इतिकर्तव्यताकाङ्क्षा नास्तीत्युभयाकाङ्क्षारूपप्रकरणाभावात् कथमभिक्रमणादेः प्रयाजाङ्गत्वमिति शङ्कां मनसि कृत्वा प्रयाजादेरपीतिकर्तव्यताकाङ्क्षाऽस्तीत्याह—**प्रयाजेति**। प्रयाजादीन् यजतीत्यत्र शब्दतो लब्धोंऽशः प्रयाजैर्भावयेदिति। प्रकरणाद् यागोपकारमिति। अपूर्वप्रकरणोक्तरीत्या सर्वाङ्गसाहित्यान्यथानुपपत्त्या लब्धं अपूर्वं कृत्वेति। एवं प्रयाजान् यजतीत्यत्र आख्यातोपात्तभावनायाः प्रकरणाद् भाव्यांशस्य वाक्य एव करणांशस्य लाभे सत्यनन्तरमितिकर्तव्यताकाङ्क्षाऽपि भवत्येवेति भावः। अस्या आकाङ्क्षाया अभिलाषः कथमेभिरपूर्वं कर्तव्यमिति। एभिः प्रयाजैः। सत्त्वात् प्रकरणसम्भवाद् अभिक्रमणं तदङ्गमिति पूर्वेणान्वयः। नन्वेवं प्रयाजाद्यङ्गभावनानामपि इतिकर्तव्यताकाङ्क्षासत्त्वेऽनूयाजादीनामपि तत्रान्वयः स्यादित्यत्र पूर्वोक्तमेव सन्दंशकृतं विशेषं स्मारयन्नाह —**सा चेति। सन्दंशेति**। सन्दंशे प्रयाजानुवादेन विहितयोरङ्गयोर्मध्ये पठितैरिति। पूर्वं हृदि स्थितामङ्गभावनानामितिकर्तव्यताकाङ्क्षाराहित्यशङ्कां निराकरोति—**न चेति। भावनेति**। आग्नेयादिप्रधानभावनातुल्यत्वेनेत्यर्थः। भावयेदिति ह्युक्ते किं केन कथमिति सर्वत्रैवाकाङ्क्षात्रयं भवति। न तु आग्नेयेन भावयेदित्यत्रैव कथम्भावाकाङ्क्षा जायते प्रयाजैर्भावयेदित्यत्र न जायत इत्यत्र नियामकं किञ्चिदस्तीत्यर्थः।

सिद्धरूपाणि क्रियारूपाणि चेत्यङ्गानामनुपदं द्वेधा विभागं करिष्यति। तत्रेदं प्रकरणं क्रियारूपाणामेवाङ्गानां साक्षादङ्गत्वबोधकं न तु श्रुत्यादिप्रमाणान्तरवत् सिद्धरूपाणामपि। क्रियाद्वारा परम्परया त्वेषामिदमङ्गताबोधकमिति प्रकरणस्य प्रमाणान्तरापेक्षया विशेषमाह—**तदिदमिति**। उक्तविधमितिकर्तव्यताकाङ्क्षाघटितमित्यर्थः। क्रियाया एव न द्रव्यगुणादेस्सिद्धवस्तुनः। साक्षाद् द्वारमनपेक्ष्य। किन्तर्हि

**कर्तव्यतात्वेनान्वेति । क्रियाया एव लोके कथम्भावाकाङ्क्षायामन्वयदर्श-नात् । न हि कुठारेण छिन्द्यादित्यत्र कथम्भावाकाङ्क्षायामुच्चार्यमाणोऽपि हस्तोऽन्वेति; किन्तु हस्तेन उद्यम्य निपात्येति उद्यमननिपातन एव । हस्तश्च तद्द्वारेणैवान्वेतीति सर्वजनीनमेतत् । इदं च स्थानादिभ्यो बलवत् । अत एव अक्षैर्दीव्यति राजन्यं जिनातीति विदेवनादयो धर्माः अभिषेचनीयसन्निधौ पठिता अपि स्थानान्न तदङ्गम्; किन्तु प्रकरणात् राजसूयाङ्गमिति ।**

---

प्रकरणेन द्रव्यगुणादेर्ग्रहणमेव नास्ति ? न । अस्त्येव । किन्तु क्रियाविशेषणत्वेनेत्याह—**द्रव्यगुणयोस्त्विति ।** **तद्द्वारेति ।** क्रियाविशेषणत्वेनेत्यर्थः । अत्रोदाहरणं जाघन्या पत्नीः संयाजयन्तीति । अत्र हि जाघनीविशिष्टपत्नीसंयाजविधौ पत्नीसंयाजस्य साक्षात्, तद्विशेषणत्वेन च जाघन्याः प्रकरणेन ग्रहणम् । क्रियाया एव साक्षाद्विनि-योजकमित्येतदुपपादयति—**तथा हीति ।** क्रियैव इतिकर्तव्यतात्वेनान्वेतुं योग्या न द्रव्य-गुणादीत्यत्र हेतुं वदिष्यन् प्रथमं क्रियैव उभयाकाङ्क्षारूपप्रकरणवशादितिकर्तव्यतात्वे-नान्वेतीति प्रतिज्ञां करोति—**यजेतेति ।** उभयाकाङ्क्षासद्भावोपपादनायोक्तम् **अश्रूय-माणफलकमिति ।** स्ववाक्ये फलश्रवणे सति हि उपकार्याकाङ्क्षा न स्यात् । तत्तु नास्ति प्रयाजादीनामिति । अश्रूयमाणफलकानामपि ज्योतिष्टोमसन्निधौ पठितानां कर्मणां दर्शपूर्णमासभावनायामितिकर्तव्यतात्वेनान्वयाभावात्—**सन्निधिपठितेति ।** सन्निधि-पठितं च तद् अश्रूयमाणफलकं चेति कर्मधारयः । **क्रियाजातमिति ।** एवेति शेषः । हेतुमाह —**क्रियाया एवेति ।** अन्वयदर्शनाद् अन्वयदर्शनेन योग्यत्वावसायादित्यर्थः । सिद्धवस्तुनो योग्यताविरहं उदाहरणेन दर्शयति—**न हीति ।** उच्चार्यमाणोऽपि पदेनो-पात्तोऽपि । अत्र इतिकर्तव्यतात्वेनान्वययोग्ये क्रिये दर्शयति—**किन्त्विति । इतीति ।** इत्येतत्पदप्रतिपाद्ये इत्यर्थः । **उद्यमनेति ।** उद्यमननिपातन एव अन्वीयेत इति योज्यम् । द्रव्यगुणयोस्तु तद्द्वारेति यदुक्तं तदस्मिन् लौकिके उदाहरणे दर्शयति **हस्तश्चेति ।** नात्राधिकमुपपादनमावश्यकमित्यभिप्रायेणाह—**सर्वेति ।**

नन्वेवं यत्र द्रव्यगुणादिविशिष्टानामारादुपकारकाङ्गानामुपदेशः, तत्र क्रिया-विशेषणत्वेन द्रव्यगुणादेर्भावनान्वयेऽपि यत्र गुणमात्रोपदेशः, यथा सामविशेषाणां मन्त्र-विशेषाणां च, तत्र तस्य इतिकर्तव्यतात्वेन अन्वयाय प्रकरणविषयत्वं साक्षाद्वक्तव्य-मेवेति चेत्, न, सिद्धवस्तुन इतिकर्तव्यतात्वासम्भवेन प्रकरणग्रहणासम्भवात् । तदुक्तं वार्तिककृता—

**देशसामान्यं स्थानम्। तद् द्विविधम्। पाठसादेश्यं अनुष्ठान-सादेश्यं चेति। स्थानं क्रमश्चेत्यनर्थान्तरम्। पाठसादेश्यमपि द्विविधम्।**

---

**गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः। इति।**

पूर्वार्धस्थो नञिह सम्बध्यते। प्रकृताः क्रियाः फलवन्ति कर्माणि फलभावना एव वा। कथम्भावैः इतिकर्तव्यताकाङ्क्षया। प्रकरणेनेति पर्यवसितम्। गुणद्रव्ये न गृह्णन्ति तदन्वितानि न भवन्तीत्यर्थः। नन्वेवमुपदिष्टस्य सिद्धवस्तुन आनर्थक्यं स्यात्। न खल्वितिकर्तव्यतातिरिक्तेन सम्बन्धेन तस्य फलभावनायामन्वयः सम्भ-वति। अंशत्रयवत्या भावनाया अंशद्वयस्य फलकरणाभ्यां पूरितत्वात् तदतिरिक्तस्य सर्वस्य इतिकर्तव्यतांशपातित्वस्यैव वक्तव्यत्वादिति चेदुच्यते। इतिकर्तव्यताभूतां क्रियां द्वारीकृत्यान्वयात् नानर्थक्यमिति। ननु क्रिया नास्तीत्युक्तम्। सत्यम्। किन्तु कल्प्यते। कथम्? तेनैव द्रव्यगुणविधिवाक्येन पदाध्याहारादिना। तदिदमभिप्रेत्याह–

**नावान्तरक्रियायोगादृते वाक्योपकल्पितात्। इति।**

सोमनाथोऽप्याह चित्राधिकरणपूर्वपक्षे—**अवान्तरप्रकरणेनेति।** यद्यपि 'नावान्तर' इत्यभियुक्तोक्तेः संख्याविशिष्टाज्यद्रव्यमात्रस्य प्रकरणविनियोज्यत्वमनुप-पन्नम्। तथाप्याज्यस्य न स्वरूपेण स्तोत्राङ्गत्वं सम्भवति; किन्तु सन्निधानेन। तच्च सन्निधापनं विना न सम्भवतीति संख्याविशिष्टाज्यानि सन्निधापयेदित्येवमयं विधिः पर्यवसित इति सन्निधापनक्रियायोगादाज्यलक्षणद्रव्यस्य प्रकरणविनियोग उपपद्यत इति भावः तदत्र सिद्धवस्तुन इतिकर्तव्यतात्वं नास्ति। तेन प्रकरणग्राह्यत्वं च नास्तीति वार्तिके उत्तरार्धस्यार्थः। इतिकर्तव्यताभूतक्रियाविशेषणत्वेन भावनान्व-यस्तु न्यायनिरपेक्षं सिद्धः। तत्र क्रियायां स्ववाक्योपात्तायां तद्द्वारा द्रव्यगुणादेर्भाव-नान्वय इत्यनुक्तिसिद्धम्। यत्रापि तु नोपात्ता तत्रापि तां कल्पयित्वा तद्द्वारा तदन्वय इति वार्तिके पूर्वार्धस्यार्थ इति विवेचनीयम्।

प्रकरणस्य स्वानन्तरप्रमाणापेक्षया प्राबल्यमाह—**इदं चेति**। स्थानादिभ्य इति बहुवचनमविवक्षितम्। स्थानसमाख्ययोर्द्वयोरेव प्रकरणानन्तरप्रमाणत्वात्। तदुक्त-मापदेवेन तदिदं स्थानादिप्रमाणाद्बलवदिति। प्राबल्यमुदाहरति—**अत एवेति**। प्रकरणस्य प्राबल्यादेवेत्यर्थः। अभिषेचनीयः सोमयागविशेषो राजसूयान्तर्गतः। स्थानात् सन्निधिपाठरूपात्। तदङ्गमभिषेचनीयाङ्गम्। नात्र स्वारसिकं प्रकरणं किन्तु सन्दंशसम्पादितमित्यन्यत्र स्थितम्।

अङ्गत्वे पञ्चमं प्रमाणं स्थानं दर्शयति—**देशेति**। समानस्य भावः सामान्यं देशस्य सामान्यं देशसामान्यं तुल्यदेशत्वमित्यर्थः। **पाठेति**। समानो देशो यस्य सः

**यथासंख्यपाठः, सन्निधिपाठश्चेति । तत्र ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वादशकपालं निर्वपेदित्येवं क्रमविहितेषु इन्द्राग्नी रोचना दिव इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवंरूपो विनियोगो यथासंख्यपाठात् । प्रथमपठितस्य हि मन्त्रस्य कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते समानदेशत्वात् । एवं द्वितीयमन्त्रस्यापि ।**

**वैकृताङ्गानां प्राकृताङ्गाननुवादेन विहितानां सन्दंशापतितानां विकृत्यर्थत्वं सन्निधिपाठात् । यथा उपहोमानाम् । तेषां हि कैमर्थ्यापेक्षायां**

---

सदेशः, तस्य भावः सादेश्यं पाठस्य सादेश्यं पाठसादेश्यं पाठप्रयुक्तं सादेश्यमित्यर्थः। एवमनुष्ठानसादेश्यमित्यत्रापि। ननु वार्तिके 'तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः' इति क्रमलक्षणत्वेनोक्तस्य देशसामान्यत्वस्य कथं स्थानलक्षणत्वेन भवता अभिधानमित्याशङ्कापरिहाराय स्थानमेव तत्र क्रमपदेनाभिधीयत इत्यभिप्रेत्याह—**स्थानमिति**। अन्योऽर्थः अर्थान्तरं न अर्थान्तरमनर्थान्तरम्। स्थानं क्रमश्चेत्यनयोः पदयोरर्थभेदो नास्तीत्यर्थः। यथासंख्यपाठमुदाहरति—**तत्रेति**। क्रमविहितेष्विति। कर्मस्विति शेषः। 'क्रमविहितेष्टिषु' इति खापदेवीये दृश्यते। तथैवात्रापि भाव्यमिति पश्यामः। यथासंख्यं संख्यामनुसृत्य। अस्यैव विवरणम् **प्रथमस्येति**। प्रथमस्य कर्मणः प्रथमं याज्यानुवाक्यायुगलम्। उक्तमेवोपपादयति **प्रथमेति**। अत्र प्रथमविहितस्य कर्मणः स्मारकापेक्षायां प्रथमपठितमेव याज्यानुवाक्यायुगलम् उपतिष्ठत इत्याकाङ्क्षान्तरमप्युपपादनीयम्। **कैमर्थ्येति**। कोऽर्थो यस्य स किमर्थः। कस्मै अयं किमर्थ इति वा। तस्य भावः कैमर्थ्यं तस्याकाङ्क्षेति। समानदेशत्वाद् उभयोः प्रथमपठितत्वेन तुल्यदेशत्वादित्यर्थः। एवमपेक्षिताङ्गिसमर्पणद्वारैवास्य प्रमाणस्य अङ्गताबोधकस्वरूपं विनियोजकत्वमिति वेदितव्यम्।

सन्निधिपाठं दर्शयति—**वैकृतेति**। विकृतौ भवानि वैकृतानि। वैकृतस्यापि औदुम्बरो यूपो भवतीति प्राकृताङ्गानुवादेन विधीयमानस्य औदुम्बरत्वादेरुभयाकाङ्क्षालक्षणेन प्रकरणेनैव ग्रहणमित्यापदेवीय उपपादितम्। तस्मात् तद्व्यावृत्तये प्राकृताङ्गाननुवादेन विहितानामिति। तथा विकृतौ प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तराले सन्दंशाभिधाने विधीयमानानामामनहोमादीनामपि प्रकरणेनैव विनियोग इत्येतदपि तत्रैवोपपादितम्। तेषां व्यावर्तनायोक्तम्—**सन्दंशापतितानामिति**। तादृशाङ्गयोर्मध्येऽपठितानामित्यर्थः। उदाहरणमाह —**यथेति**।

**फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बध्यते। उपस्थितत्वात्। स्वतन्त्र-फलकत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च।**

**पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात्। औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते। तस्मिन्नेव दिने ते धर्माः पठ्यन्ते। अतस्तेषां कैमर्थ्याकाङ्क्षायाम् अनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन**

---

नक्षत्रेष्टौ सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा इत्याम्नाता होमा उपहोमा इत्युच्यन्ते। अत्र यथा आमनहोमानामित्यपपाठः। ननु पूर्वोक्तरीत्या विकृतेरितिकर्तव्यताकाङ्क्षायाः प्राकृताङ्गैरेव शान्तत्वेन उपहोमादिविषये अभावात् कथमेषां विकृत्यर्थत्वमङ्गीक्रियते। एषां भाव्याकाङ्क्षाऽन्यथा न निवर्तत इति चेत् तदर्थं स्वतन्त्रमेव किञ्चित् फलं कल्प्यतामित्याशङ्कां परिहरन् विकृत्यर्थत्वमेव तेषां वक्तव्यम्, न स्वतन्त्रं किञ्चित् फलं कल्पयित्वा तदर्थत्वमित्याह—**तेषां हीति**। उपहोमानामित्यर्थः। वैकृताङ्गानामिति वा। व्रीह्यादिवत् विकृतेः स्वरूपेण भाव्यत्वाभावादुक्तम्—**विकृत्यपूर्वमिति**। अत्र हेतुमाह—**उपस्थितत्वादिति**। भावनाया भाव्याकाङ्क्षायां सत्यां यस्य प्रमाणवशेन उपस्थितिर्भवति तस्य ह्यन्वयो न्याय्यः। नानुपस्थितस्य स भवितुमर्हति। तत्र सन्निधिवशाद् विकृत्यपूर्वस्य उपस्थितिरस्ति नान्यस्य। तथाविधस्य प्रमाणस्य कस्यचिदभावादित्यर्थः। ननु विश्वजिता यजेतेत्यत्राश्रुतस्यापि स्वर्गस्य भाव्यत्वेनान्वयः सिद्धान्ते अङ्गीकृतः। तथा च तत्र तस्य येन प्रमाणेनोपस्थितिः तेनैवात्रापि भविष्यतीत्याशङ्क्याह—**स्वतन्त्रेति**। कथञ्चिद् विकृत्यपूर्वसम्बन्धे सति हि विकृतिसन्निधिपाठस्य सार्थक्यं स्यात् स्वतन्त्रफलार्थत्वे कथमपि विकृतिसम्बन्धस्य वक्तुमशक्यत्वात् तत्सन्निधौ विधानं निष्फलं स्यादित्यर्थः। **स्वतन्त्रं** विकृत्यपूर्वव्यतिरिक्तम्।

अनुष्ठानसादेश्यमुदाहरति—**पश्विति**। पशोः पशुद्रव्यस्य यागस्य धर्माः अङ्गानि यूपच्छेदनादीनि। **अनुष्ठानेति**। पञ्चदिनसाध्यः सोमप्रयोगः। तत्र प्रथमोपसद्दिने सोमक्रयसन्निधौ अग्नीषोमीयपशुर्विधीयते। चतुर्थे तु औपवसथ्याभिधाने दिने यूपच्छेदनादयो धर्मा विधीयन्ते। तेन उपहोमानामिव सन्निधिपाठरूपं स्थानं न सम्भवतीति बोध्यम्। अनुष्ठानसादेश्यमुपपादयति—**औपवसथ्य इति**। न च यस्मिन् दिने आम्नानं तत्रैवानुष्ठानं कथं न भवतीत्याशङ्क्यम्। स एष उपवसथीयेऽहन्

**सम्बध्यते। तच्च स्थानं समाख्यातः प्रबलम्। अत एव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं पाठसादेश्यात्। न तु पौरोडाशिकमिति समाख्यया पुरोडाशपात्राङ्गम्।**

**समाख्या यौगिकः शब्दः। सा च द्विविधा—वैदिकी लौकिकी च। तत्र होतुश्चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समाख्यया। अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः। तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट्प्रमाणानि।**

**एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनियुज्यन्ते अङ्गानि तानि**

---

द्विदेवत्यः पशुरालभ्यत इति वचनबलेन औपवसथ्येऽहन्येव तस्यानुष्ठेयत्वात्। अनुष्ठानसादेश्यस्याङ्गताग्राहकत्वमुपपादयति—**अत इति**। तेषां धर्माणाम् अग्नीषोमीयपश्वनुष्ठानदिने पठितत्वादित्यर्थः। स्थानस्य स्वानन्तरप्रमाणात् प्राबल्यमाह—**तच्चेति**। अत्रोदाहरणमाह—**अत एवेति**।

समाख्यां निरूपयति—**समाख्येति**। योगोऽवयवार्थव्युत्पत्तिस्तेनार्थप्रतिपादको यौगिकः। वैदिकीं समाख्यामुदाहरति—**तत्रेति**। चमसः सोमधारणार्थः पात्रविशेषः, तस्मिन् कर्तव्यं यत् सोमरसभक्षणं तत्र होतुरङ्गत्वमिति। लौकिकीमुदाहरति—**अध्वर्योरिति**। **तत्तत्पदार्थेति**। यजुर्वेदाम्नातप्रयाजादीन्यर्थः। **संक्षेप इति**। एवमेषां प्रमाणानां पूर्वपूर्वस्य स्वानन्तरोत्तरप्रमाणेन विरोधे प्राबल्यदौर्बल्यमुक्तम्। एषामेव सजातीयविरोधे विजातीयेष्वपि एकान्तरितद्व्यन्तरितादिविरोधे च मूलग्रन्थेषु बलाबलनिरूपणं विस्तरेण कृतम्। तत्सर्वमिह विस्तरभिया उपेक्षितमित्यभिप्रायः। आध्वर्यवमित्यादिसमाख्याया आपदेवोक्तप्रकारेण स्थानापेक्षया प्राबल्यं न भवतीत्याद्यभिप्रेत्यापीदमुक्तम्—**संक्षेप इति**। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानीत्युपक्रान्तं अङ्गत्वप्रमाणनिरूपणमुपसंहरति—**तदेवमिति**।

एवं श्रुत्यादिप्रमाणषट्कसहितं विनियोगविधिं निरूप्य सम्प्रति तत्प्रमेयान्यङ्गान्यतिसंग्रहेण निरूपयिष्यन् विधिवाक्यनिरूपणावसरे कथमङ्गनिरूपणमिति सङ्गत्यभावशङ्कायां प्रमाणनिरूपणे सति तत्प्रमेयजिज्ञासायाः स्वरससवाहित्वान्न तन्नि-

**द्विविधानि—सिद्धरूपाणि क्रियारूपाणि चेति । सिद्धरूपाणि जातिद्रव्य-संख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि—गुण-कर्माणि प्रधानकर्माणि चेति । एतान्येव सन्निपत्योपकारकाणि आराद्-दुपकारकाणि चेत्युच्यन्ते ।**

---

रूपणमसङ्गतमिति समाधानाभिप्रायेण उक्तप्रमाणप्रमेयत्वेनाङ्गान्यनुवदन् विभजते—**एतदिति**। विधेराकारं दर्शयति—**समिदादिभिरिति**। समिध इति समिधो यजतीति प्रथमप्रयाजसंज्ञा। ननु विनियोगविधौ अङ्गस्य करणत्वादिरूपेण अङ्गिन उद्देश्यत्वेन चान्वयो वक्तव्यः, दध्ना होमं भावयेदितिवत्। तत्र प्रकृते समिदादिभिरिति समिदादीनामङ्गानां करणत्वेन प्रतिपादनं युज्यते। अङ्गिनां तु दर्शपूर्णमासयागानाम् उद्देश्यत्वेन निर्देशमन्तरा कथं दर्शपूर्णमासाभ्यामिति करणत्वेन निर्देशः क्रियत इति चेत् श्रूयताम्। अत्र उपकृत्येत्यतः पूर्वं दर्शपूर्णमासयोरित्यध्याहर्तव्यं समिदादिभिर्दर्शपूर्णमासयोरुपकृत्येति। तत्र षष्ठीश्रुत्या दर्शपूर्णमासयोरुद्देश्यत्वाभिधानाद् दर्शपूर्णमासभाव्यका समिदादिकरणिका भावनेति बोधान्नानुपपत्तिरिति।

नन्वेवं समिदादिभिर्दर्शपूर्णमासयोरुपकुर्यादित्येतावतैव विनियोगविधेः पर्यवसानात्। किमर्थम् उपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्यधिकतया दर्शपूर्णमासकरणकभावनाया उपादानम्। उच्यते—समिदादीनामङ्गानामुत्पत्तिविधिः समिधो यजतीत्येवमादिरूपः पठ्यते। विनियोगविधिस्तु उक्तरीत्या कल्प्यते। इत्येवं स्थिते यदि कश्चित् मन्यते प्रयोगविधिरपि कश्चिदतिरिक्तः कल्पनीय इति, तस्य नाङ्गानां पृथक्प्रयोगविधिः कल्पनीय इति प्रतिबोधनाय एवं प्रतिपाद्यते। प्रकरणादिवशेन हि समिदादिभिर्दर्शपूर्णमासयोरुपकुर्यादिति विनियोगे सिद्धे अङ्गानां प्रधानानां च एकवाक्यतया समिदादिरूपाङ्गकलापजन्योपकारपूर्वकं दर्शपूर्णमासयागैरिष्टं भावयेदिति एक एव अङ्गप्रधानानां प्रयोगविधिः कल्प्यते नातिरिक्त इत्यलम्। **सिद्धरूपाणि** निष्पन्नत्वेन भासमानस्वरूपाणि। पचति पपाचेत्येवमादौ हि पाकादिक्रियायाः पुरुषप्रयत्नसाध्यतया भानमिति तिङन्ताभिधेया क्रिया साध्यरूपा भवति। घटो बर्हिः, एकं द्वे इत्यादौ तु न तथा भानमिति सिद्धरूपता। संख्यादीत्यादिना आरुण्यश्वैत्यादिगुणान्तराणां ग्रहणम्। एषां सिद्धरूपाणामङ्गानां क्रियारूपेभ्यो विशेषमाह—**तानि चेति**। दृष्टार्थानि दृष्टफलानि। न तु क्रियारूपाणीव दृष्टार्थान्यदृष्टार्थान्युभयार्थानि

**कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् । यथाऽवघातप्रोक्षणादि । तच्च त्रिविधम्—दृष्टार्थम्, अदृष्टार्थम्, दृष्टादृष्टार्थं चेति । तत्र दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशादि । तद्धि द्रव्यत्यागांशेनैवादृष्टं देवतोद्देशांशेन च देवतास्मरणं दृष्टं करोति । इदमेव च आश्रयिकर्मेत्युच्यते । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्माऽऽरादुपकारकम् । यथा प्रयाजादि । आरादुपकारकं च परमा-**

---

चेत्येवकारार्थः । एवं दृष्टार्थत्वेन एकविधत्वादेवात्र नाधिकं वक्तव्यमिति हृदयम् । क्रियारूपाणि निरूपयितुं विभजते—**क्रियेति** । गुणभूतानि कर्माणि गुणकर्माणि—प्रधानभूतानि कर्माणि प्रधानकर्माणि । उभयेषामेषां क्रियारूपाणां व्यावहारिकीं संज्ञामाह—**एतान्येवेति** । यथासंख्यमिति शेषः ।

सन्निपत्योपकारकं लक्षयति—**कर्मेति** । कर्मणो यागादेरङ्गं यद् द्रव्यं व्रीह्यादि तदाद्युद्देशेनेत्यर्थः । एतेन द्रव्यादिकं प्रति गुणत्वादेव गुणकर्मत्वमिति गुणकर्मत्वोपपादनमपि कृतं वेदितव्यम् । तदिदं सन्निप त्योपकारकं त्रिविधमित्यभिप्रेत्याह—**तच्चेति** । ननु कथमेकस्य कर्मण उभयार्थत्वमित्याशङ्क्य अंशभेदेन तदुपपत्तिरिति समाधानमभिप्रेत्याह—**तद्धीति** । देवतोद्देशेन द्रव्यत्यागो हि यागः । तत्र एकांशो दृष्टार्थः । अन्योऽदृष्टार्थ इति न विरोध इति । उभयार्थस्य कर्मणो नामान्तरमाह—**इदमेवेति** । प्रयाजादिवद् अदृष्टार्थत्वे सत्येव द्रव्यादिकमपि गुणकर्मवदाश्रयतीति आश्रयीत्यभिधानम् । अस्य इदमेव चेत्यादिग्रन्थस्य सर्वेषु मुद्रितपुस्तकेष्वन्यत्र पाठः प्रामादिकः । आरादुपकारकं लक्षयति—**द्रव्याद्युद्देशेनेति** । अस्यैव विवरणम्—**केवलमिति** । एतेन द्रव्यादीनामुद्देश्यत्वाभावाभिधानद्वारा गुणत्वप्रत्यायनाद् द्रव्यादिकमपेक्ष्य प्राधान्यात् प्रधानकर्मत्वमिति ज्ञापितमिति ज्ञेयम् । पूर्वं श्रुतिनिरूपणप्रकरणे एवं सर्वेष्वङ्गेष्वपूर्वप्रयुक्तमङ्गत्वं बोध्यमित्युक्तम् । तत्रेदानीम् आरादुपकारकसन्निपत्योपकारकयोर्विषये विशेषमाह—**आरादुपकारकं चेति** । **उत्पत्तावेवेति** । न तु सन्निपत्योपकारकवद् यागस्वरूपनिष्पत्तिद्वारा इति एवकारार्थः । **यागस्वरूपेऽपीति** । अपिना उत्पत्त्यपूर्वसमुच्चयः । यागस्वरूपद्वारा उत्पत्त्यपूर्व उपयुज्यत इत्यर्थः । यागस्वरूप उपयुज्यमानानामेवाङ्गानाम् उत्पत्त्यपूर्वार्थत्वमिति ज्ञापनाय एवं वक्राभिधानमिति ज्ञेयम् ।

पूर्वोत्पत्तावेवोपयुज्यते । सन्निपत्योपकारकन्तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते । तदेवं निरूपितः संक्षेपतो विनियोगविधिः ।

॥ अथ प्रयोगविधिः ॥

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः । स चाङ्गवाक्यैकवाक्यतापन्नः प्रधानविधिरेव । स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावाद् अविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते । न च तदविलम्बेऽपि प्रमाणाभाव इति वाच्यम् । विलम्बे हि अङ्गप्रधान-

---

ननु कथं सन्निपत्योपकारकाणां यागस्वरूपोपयोगित्वमित्याशङ्क्योक्तम्—**द्रव्यदेवतासंस्कारद्वारेति** । द्रव्यदेवते हि यागस्य रूपे । सन्निपत्योपकारकाणि चाङ्गानि द्रव्यदेवतान्यतरसंस्काररूपाणि भवन्ति । तेन सन्निपत्योपकारकाणां यागस्वरूपनिष्पादकत्वमिति भावः । तथा च परमापूर्वप्रयुक्तत्वमारादुपकारकाणाम् उत्पत्त्यपूर्वप्रयुक्तत्वं सन्निपत्योपकारकाणामिति विशेष उक्तो भवति । विनियोगविधिप्रकरणमुपसंहरति—**एवमिति** ।

॥ इति विनियोगविधिप्रकरणम् ॥

प्रयोगविधिं निरूपयति—**प्रयोगेति** । प्रकर्षेण आशुः, प्राशुः तस्य भावः प्राशुभावः प्रयोगस्य यः प्राशुभावः शैघ्र्यम् अविलम्बस्तस्य बोधकः प्रयोगविधिरित्यर्थः । प्रयोगोऽनुष्ठानम् । नन्वस्य लक्षणस्य किं लक्ष्यं तत्राह—**स चेति** । प्रयाजानुयाजादिप्राच्योदीच्याङ्गसहिताभ्यां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्ययमेव प्रयोगविधिरित्यर्थः । न त्वङ्गविधिप्रधानविधिभ्योऽतिरिक्तः प्रयोगविधिर्नाम कश्चिच्छ्रूयत इत्येवकारार्थः । नन्वस्य साङ्गदर्शपूर्णमासकर्तव्यताबोधकस्य कथं प्रयोगप्राशुभावबोधकत्वमित्यत्राह—**स हीति** । अयं भावः—प्रयोगविधिस्तावत् फलकामस्य सर्वाण्यङ्गप्रधानानि कर्तव्यानीति बोधयति । तत्र बहुषु कर्तव्येषु युगपदशक्यत्वात् प्रथममेकं कृत्वाऽनन्तरमन्यत् कर्तव्यम् । तत्र किमेकमङ्गं कृत्वा कञ्चित् कालं विलम्ब्यानन्तरम् अङ्गान्तरं प्रधानं च कर्तुं युक्तम् उत एकस्यापि क्षणस्य विलम्बमन्तराऽनन्तरक्षण एव कर्तव्यमिति विमर्शे विलम्ब्य कर्तव्यमिति वचनविशेषस्यादर्शनात् सर्वाण्यङ्गप्रधानान्यविलम्बेन कर्तव्यानीत्यत्र प्रयोगविधिस्तात्पर्यवानिति निश्चीयते । तथा च तस्य प्राशुभावबोधकत्वमिति । अत्र यदि कश्चिदाशङ्केत विलम्ब्य कर्तव्यमिति वचनाभावमात्रेण अविलम्ब्य कर्तव्यमिति

**विध्येकवाक्यतावगततत्साहित्यानुपपत्तिः । विलम्बेन क्रियमाणयोः पदार्थयोः इदमनेन सह कृतमिति साहित्यव्यवहाराभावात् ।**

**स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति । अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः**

---

कथं सिद्ध्यति । न ह्यविलम्ब्य कर्तव्यमिति वचनान्तरमस्ति । प्रयोगविधिस्तु सर्वाण्यङ्गानि प्रधानं च कर्तव्यानीत्येतावन्मात्रं बोधयति । न तु तेषामनुष्ठानेऽविलम्बमपि—इति, तन्निरस्यति—**न चेति ।** सर्वाण्यङ्गप्रधानानि कर्तव्यानीति बोधयता प्रयोगविधिना सर्वेषामङ्गप्रधानानां मिथः साहित्यमपि बोध्यत इत्यन्यत्र स्थितम् । तच्च साहित्यं विलम्बे सति नोपपद्यत इति श्रुतसाहित्यान्यथानुपपत्तिरूपार्थापत्तिप्रमाणसहितः प्रयोगविधिरेवाविलम्बबोधको भवतीत्याह—**विलम्बे हीति । अङ्गेति ।** अङ्गप्रधानानां विधयस्तेषामेकवाक्यता प्रयोगविधिस्वरूपा तयाऽवगतं यत् तत्साहित्यं तेषामङ्गप्रधानानां मिथः साहित्यं तस्यानुपपत्तिरिति । उपपादयति—**विलम्बेनेति । इतीति ।** इत्येवंरूपो यः साहित्यव्यवहारस्तदभावात् ।

एवं साहित्यबोधनद्वारा यदविलम्बबोधकत्वं तत् प्रयोगविधेर्लक्षणमित्युक्तम् । अथ तस्याविलम्बस्य निर्वाहकं क्रम इत्युच्यमानमर्थान्तरमपि प्रयोगविधिना इत्यभिधास्यन् प्रथमं तन्निर्वाहकत्वमाह—**स चेति ।** प्रयोगविधिना बोध्यमानश्चेत्यर्थः । **नियम इति ।** बहुषु पदार्थेष्वनुष्ठीयमानेषु यः कश्चित् क्रमोऽवश्यम्भावी । स तु पुरुषभेदेन कालभेदेन च भिद्यते । तादृशः क्रम इह नोच्यते । तस्याविलम्बहेतुत्वाभावात् । किन्त्वस्य पदार्थस्यानन्तरमयमेव पदार्थः कर्तव्यः, तस्यानन्तरमयमेव तस्यानन्तरमयमेवेति सर्वदा सर्वैरादरणीयतया निश्चितो यः क्रमः स इहोच्यत इति भावः । अविलम्बहेतुत्वं क्रमस्योपपादयन् क्रमाभावे अविलम्बो न भवतीत्याह—**अन्यथेति ।** क्रमानाश्रयण इत्यर्थः । प्रयोगविक्षेपापत्तेरित्यत्रान्वयः । प्रयोगस्य विक्षेपो विलम्बः । ननु क्रमानाश्रयणे कथं विलम्ब इत्यत्रोक्तम्—**किमेतदिति ।** पूर्वमेव क्रमनिश्चयाभावे प्रयोगमध्ये एतत् कर्म किमेतस्य कर्मणोऽनन्तरम्, उत एतस्यानन्तरमिति विचारो जायेत । तेन च विचारेण विलम्बो जायेतेति भावः । अत्र विक्षेपः पदार्थलोप इति व्याचक्षाणा भाट्टालङ्कारकारप्रभृतयोऽत्यन्तमुपेक्षणीयाः । किमेतदित्याद्यनन्वयात् । क्रमाभावे पदार्थलोपापत्तेः क्रमे सति अविलम्बो भवतीत्युपपादनस्य चात्यन्तं परिहास्यत्वात् । एवमविलम्बनिर्वाहकत्वं क्रमस्योक्तम् । अथ तादृशा-

**प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्धयर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। अत एव अङ्गानां क्रमबोधको विधिः प्रयोगविधिरित्यपि लक्षणम्।**

**॥ श्रुतिक्रमनिरूपणम् ॥**

**तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा। तत्र षट् प्रमाणानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यानि। तत्र क्रमपरवचनं श्रुतिः। तच्च द्विविधम्—केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति। तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम्। वेदिकरणादेर्वचनान्तरप्राप्तत्वात्। वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरम्। एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात्।**

---

विलम्बसिद्धये तादृशं क्रममपि स एव प्रयोगविधिर्विधत्त इत्याह—**अत इति**। अन्यथा प्रयोगविक्षेपापत्तेरित्यर्थः। ननु क्रमस्य विधानमशक्यम्, स्वतन्त्रपदार्थत्वाभावात्। न हि दानहोमादिवत् क्रमः स्वतन्त्रः पदार्थः। स्वातन्त्र्येण बुद्धावारोपयितुमशक्यत्वाद् इत्याशङ्क्योक्तम्—**पदार्थविशेषणतयेति**। सत्यं न स्वतन्त्रपदार्थः क्रमः। अतएव न साक्षाद्विधिविषयीभवितुमर्हति। तथापि समिद्यागानन्तरं तनूनपाद्यागः कर्तव्यः, तदनन्तरं इड्यागः कर्तव्य इत्येवंरूपेण स्वतन्त्रपदार्थभूतयागादिविशेषणतया विधातुं शक्यत एवेत्यलम्। प्रसङ्गाद् इदमपि प्रयोगविधेर्लक्षणं भवतीत्याह—**अत एवेति**। क्रमविधायकत्वादेवेत्यर्थः।

क्रमं लक्षयति—**तत्रेति**। उक्तरीत्या प्रयोगविधौ विषयीभूत इत्यर्थः। **विततीति**। प्रथममेकमङ्गम् अनन्तरमन्यद् अनन्तरमन्यद् अनन्तरमन्यदिति चरमाङ्गपर्यन्तं यदानुपूर्व्यं सा विततिः। तस्या विशेषो नाम वक्ष्यमाणप्रमाणषट्कानुगृहीतत्वम्। सेयं विततिः सर्वाङ्गप्रधानव्यासक्ता। अथ एकैकपदार्थवृत्तितयाऽन्यादृशं क्रमस्वरूपमाह—**पौर्वापर्येति**। पूर्वापरयोर्भावः पौर्वापर्यम् आनन्तर्यमित्यत्र तात्पर्यम्। पूर्वपदार्थानन्तर्यम् उत्तरपदार्थस्य क्रम इत्यर्थः। प्रयोगविधिविधेयस्यास्य क्रमस्य सहकारिप्रमाणानि निरूपयितुमाह—**तत्रेति**। उक्तविधे क्रम इत्यर्थः। श्रुतिं निरूपयति—**तत्रेति**। क्रमः परो बोध्योऽर्थो यस्य तत् क्रमपरं वचनम्। क्रमपरं वचनं विभजते—**तच्चेति**। **केवलेति**। केवलश्चासौ क्रमश्च तत्परमिति। **तदिति**। तेन क्रमेण विशिष्टः पदार्थस्तत्परम्। आद्यमुदाहरति—**तत्रेति**। वेदो दर्भमुष्टिविशेषः।

**सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात्। अत एवाऽऽश्विनग्रहस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तावाश्विनो दशमो गृह्यत इति वचनाद् दशमस्थाने ग्रहणमित्युक्तम्।**

**॥ अर्थक्रमः ॥**

**यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः। यथा अग्निहोत्रं जुहोति यवागूं पचतीति अग्निहोत्रयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते। स चायं पाठक्रमात्-**

---

नन्वत्र कस्माद् वेदिकरणादिपदार्थस्य न विधानमित्यत्राह—**वेदीति**। द्वितीयमुदाहरति—**वषट्कर्तुरिति**। **क्रमेति**। प्राथम्यरूपक्रमविशिष्टो यो भक्षणरूपः पदार्थस्तद्विधायकमित्यर्थः। नन्वत्र कस्माद् मानान्तरप्राप्तभक्षानुवादेन प्राथम्यमात्रविधिर्न भवतीत्यत्राह—**एकेति**। एकस्मिन्नर्थे प्रसरो वृत्तिर्यस्य तत् पदम् एकप्रसरं तस्य भाव एकप्रसरता। एकः प्रसरो ययोस्तयोर्भाव इति वा। एकार्थीभावलक्षणं सामर्थ्यमित्यर्थः। तस्या भङ्गभयेनेति। भक्षानुवादेन प्राथम्यविधाने हि भक्षस्योद्देश्यत्वेन प्राथम्यस्य च विधेयत्वेन भावनायामन्वयेन परस्परमनन्वयात् प्रथमभक्षपदस्य समासावगतं यदेकार्थप्रतिपादकत्वरूपं सामर्थ्यं तस्य भङ्गो भवेदिति। श्रुतेः क्रमबोधकप्रमाणान्तरेभ्यः प्राबल्यमाह—**सेयमिति**। तत्र हेतुमाह—**तेषामिति**। इतरप्रमाणानामित्यर्थः श्रुतिलिङ्गादिवदिदमुपपादनीयम्। श्रुतिपाठयोर्विरोधे श्रुतेः प्राबल्यमुदाहरति—**अत एवेति**। ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णातीति तृतीयस्थाने आश्विनग्रहणं श्रूयते।

अर्थक्रममाह—**अत्रेति**। येषु पदार्थेषु क्रमनिर्णयः प्रयोजनवशात् तत्सम्बन्धी क्रमः अर्थक्रम इत्यर्थः। यत्र प्रयोजनवशेन निर्णय इति पाठः श्रेयान्। यत्र यस्मिन् क्रम-इत्यर्थः। उदाहरति—**अथेति**। आर्थत्वं क्रमस्योपपादयति—**अत्रेति**। तत्पाको यवागूपाकः। अर्थक्रमस्य पाठक्रमात् प्राबल्यमाह—**स चेति**। तदेवात्राप्युदाहरणमिति मन्वानः प्राबल्ये युक्तिमाह—**यथापाठमिति**। अग्निहोत्रं जुहोति यवागूं पचतीति पाठानुसारेण पूर्वमग्निहोत्रहोमः, अनन्तरं यवागूपाक इत्येवमनुष्ठाने सतीत्यर्थः। **क्लृप्तेति**। यवागूपाकस्येति शेषः। अग्निहोत्रहोमनिष्पत्तिः क्लृप्तं प्रयोजनम्। यवाग्वाऽग्निहोत्रं जुहोतीति वचनात्। तस्य बाधः स्यात्। न ह्यनन्तरं पक्ष्यमाणाया यवाग्वाः पूर्वं क्रियमाणाग्निहोत्रहोमनिष्पत्तिः प्रयोजनं भवितुमर्हति।

**बलवान् । यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वञ्च स्यात् । न हि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टं प्रयोजनमस्ति ।**

**॥ पाठक्रमः ॥**

**पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति । यथाप्रत्ययं च पदार्थानामनुष्ठानम् । स च पाठो द्विविधः—मन्त्रपाठो ब्राह्मणपाठश्चेति । तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्यानां पाठाद्यः क्रम आश्रीयते स मन्त्रपाठात् । स चायं मन्त्रपाठो ब्राह्मणपाठाद् बलीयान् । अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रपाठस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद् बहिरेवेदं कर्तव्यमिति अवबोध्य कृतार्थम् । मन्त्राः पुनः प्रयोगकाले व्याप्रियन्ते । तेन अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीन-**

---

द्रव्यान्तरेणैव तस्य निष्पन्नत्वात् । एवं क्लृप्तहानिरूपं दोषमभिधाय अक्लृप्तकल्पनरूपं दोषान्तरमाह—**अदृष्टार्थत्वं चेति** । ननु होमरूपदृष्टप्रयोजनस्य पूर्वमेव निष्पन्नत्वेऽपि अन्यत् किञ्चिद्दृष्टप्रयोजनं यवागूपाकस्यास्त्वित्यत्राह—**न हीति** । शास्त्रबोधितं हि प्रयोजनं भवति । नैच्छिकं किञ्चित् । शास्त्रं च यवाग्वाऽग्निहोत्रं जुहोतीति होमनिष्पादनमेव प्रयोजनं बोधयति । तस्य च प्रकारान्तरेण पूर्वमेव निष्पत्तौ विहितस्य अनन्तरं क्रियमाणस्य यवागूपाकस्य अदृष्टमेव प्रयोजनं कल्पनीयमिति भावः ।

उक्तेषु श्रुत्यादिषु षट्सु क्रमप्रमाणेषु श्रुतिः, अर्थः, स्थानमिति त्रयं स्वरूपेण पदार्थानां क्रमबोधकम् । पाठो मुख्यं प्रवृत्तिरितीदं त्रयं तु न तथा । किन्तु स्वीयेन क्रमेण पदार्थानां क्रमबोधकम् । तस्मात् पाठस्य स्वीयं क्रमं तावदादौ निरूपयति—**पदार्थेति** । तेन पदार्थानां क्रमः प्रमीयत इत्याह—**तस्माच्चेति** । प्रमापकत्वमुपपादयति—**येनेति** । अर्थस्य प्रत्ययं प्रतीतिं बोधमित्यर्थः । **यथाप्रत्ययमिति** । प्रतीतिक्रमानुरोधेनेत्यर्थः । पाठं विभजते—**स चेति** । आद्यस्य क्रमबोधकत्वमुदाहरति—**तत्राऽऽग्नेयेति** । आग्नेययाज्यानुवाक्यायुगलं पूर्वं पठ्यते । अनन्तरमग्नीषोमीययाज्यानुवाक्यायुगलम् । एवं चानेन मन्त्रपाठक्रमेण पूर्वमाग्नेययागः पश्चादग्नीषोमीय इत्यनयोः पदार्थयोः क्रमः सिद्ध्यतीत्यर्थः । लाघवादत्रैव पाठद्वयस्य बलाबलमाह—**स चायमिति** । हेतुमाह—**अनुष्ठान इति** । हेतुमुपपादयति—**ब्राह्मणेति** ।

त्वाद् अन्तरङ्गो मन्त्रपाठ इति । प्रयाजानां समिधो यजति तनूनपातं यजति इत्येवं विधिपाठक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमात् । यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजादीनां (क्रम)स्मारकान्तरस्याभावात्तान्येव क्रमस्मारकत्वेन स्वीक्रियन्ते ।

॥ स्थानक्रमः ॥

स्थानं नामोपस्थितिः । यस्य हि देशे योऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्क्रे अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानमितरयोः पश्चात् तस्मिन् देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः । तथाहि । ज्योतिष्टोमे त्रयः पशुयागाः अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि । सवनीयः सुत्याकाले । आनुबन्ध्यस्त्वन्ते । साद्यस्क्रो नाम सोमयागविशेषः । स चाव्यक्तत्वाद् ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्क्रे चोदकप्राप्ताः । तेषां तत्र साहित्यं श्रुतं सह पशूनालभत इति । तच्च साहित्यं सवनीयदेशे । तस्य प्रधानप्रत्यासत्तेः । स्थानातिक्रमणसाम्याच्च । सवनीयदेशे ह्यनुष्ठानेऽग्नीषो-

---

ननु व्याप्रियन्तां नाम । तावता कथं क्रमबोधनेऽन्तरङ्गत्वमित्यत्राह—**तेनानुष्ठानेति** । तत्क्रमस्य स्मरणक्रमस्य । ब्राह्मणपाठक्रमात् क्रममुदाहरति—**प्रयाजानामिति** । पूर्वं मन्त्रपाठादिति क्रमपदं विनोक्तेः, अत्र ब्राह्मणपाठक्रमादिति क्रमपदघटनेनोक्तेश्च नातीव विशेष इति ध्येयम् । ननु पूर्वं ब्राह्मणवाक्यपाठस्य क्रमबोधने व्यापारो नास्तीत्युक्तमित्याशङ्क्य परिहरति—**यद्यपीति** । **स्वीक्रियन्त इति** । तथा च स्मारकत्वे स्थिते तदीयक्रमात् स्मार्याणां प्रयाजादीनां क्रमः सिद्ध्यतीति भावः ।

स्थानात्क्रमं निरूपयन् स्थानपदार्थमाह—**स्थानमिति** । ननु स्थानशब्दस्य उपस्थित्यर्थकत्वमप्रसिद्धमित्याशङ्कायां स्थानप्रयोज्यत्वात् लक्षणया स्थानमुपस्थितिरिति समाधानमभिप्रयन् तस्य क्रमहेतुत्वमुपपादयति—**यस्य हीति** । यस्य स्थानवतो देशे स्थाने यः स्थानान्तरस्थितस्तत्स्थानशून्यः प्रमाणान्तरवशादनुष्ठीयते तत्पूर्वतने तस्मात् स्थानवतः पूर्वकर्तव्ये पदार्थे कृते स एव स्थानवानेव

मीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति। अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रम्। आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात्। एवमनुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः। तथा च सवनीयदेशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम्। आश्विनग्रहणानन्तरं हि सवनीयदेशः। तथा च प्रकृतावाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोतीत्याश्विनग्रहणानन्तरं सवनीयो विहित इति साद्यस्केऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात्प्रथममनुष्ठानम्। इतरयोस्तु पश्चादित्युक्तम्।

॥ मुख्यक्रमः ॥

प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः। येन हि क्रमेण प्रधानानि क्रियन्ते तेनैव चेत्क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः स्वैः प्रधानैस्तुल्यं व्यवधानं भवति। व्युत्क्रमेणानुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानं केषाञ्चिदत्यन्तव्यवधानं स्यात्। तच्चायुक्तम्। प्रयोगविध्यवगतसाहित्यबाधापत्तेः। अतः

---

पदार्थः। अत्र द्वितीययच्छब्दप्रतिनिर्देशकस्तच्छब्दः पञ्चम्यन्तोऽध्याहर्तव्यः। तस्मात् स्थानशून्यात् प्रथमं पूर्वमुपस्थितो भवतीत्यर्थः। उपस्थितिक्रमानुसारेण च पदार्थानामनुष्ठानमित्युपपन्नं स्थानस्य क्रमबोधकत्वमिति। उदाहरणमाह—**अत एवेति**। स्थानरूपप्रमाणसद्भावमाह—**तस्मिन्निति**। सवनीयसम्बन्धिनीत्यर्थः। कोऽसौ सवनीयदेश इत्यत्रोक्तम्—**आश्विनग्रहणानन्तरमिति**। एवं संगृह्योक्तं विवरीतुमारभते—**तथा हीति**। **साद्यस्क इति**। समानेऽहनि क्रियमाण इत्यर्थः। समाने एकस्मिन्। **अव्यक्तत्वादिति**। स्वार्थविहितदेवताशून्य इत्यर्थ इत्यन्यत्र विस्तरः। **साहित्यमिति**। एककालानुष्ठेयत्वमित्यर्थः। नन्वस्तु प्रकृतौ भिन्नकालानुष्ठेयानां त्रयाणां साद्यस्के एककालानुष्ठेयत्वम्। तत्तु सवनीयदेश इति कथम्? अग्नीषोमीयस्य आनुबन्ध्यस्य वा देशेऽप्युपपत्तेरित्यत्राह—**तच्चेति**। **तस्येति**। सवनीयदेशस्येत्यर्थः। प्रत्यासत्तिः सन्निकर्षः। युक्त्यन्तरमाह—**स्थानेति**। इदमुपपादयति—**सवनीयेति**।

मुख्यक्रममाह—**प्रधानेति**। **मुख्यक्रम इति**। मुख्यप्रयोज्यः क्रम इत्यर्थः। प्रधानक्रमस्य अङ्गक्रमनियामकत्वमुपपादयति—**येन हीति**। उदाहरणमाह **अत एवेति**। **अभिघारणमिति**। प्रयाजशेषेण हवींष्यभिघारयतीति वाक्यविहितमभिघारणम्।

**प्रधानक्रमोऽपि अङ्गक्रमे हेतुः। अत एव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणम्। पश्चादैन्द्रस्य दध्नः। आग्नेयैन्द्रयागयोः पौर्वापर्यात्। एवं च द्वयोरभिघारणयोः स्वस्वप्रधानेन तुल्यमेकान्तरितं व्यवधानम्। व्युत्क्रमेणाभिघारे त्वाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम्। ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरितं व्यवधानम्। तच्चायुक्तमित्युक्तमेव।**

**स च मुख्यक्रमः पाठक्रमाद् दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः, पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्। स चायं मुख्यक्रमः प्रवृत्तिक्रमाच्च बलवान्। प्रवृत्तिक्रमे हि बहूनामङ्गानां प्रधानविप्रकर्षात्। मुख्यक्रमे तु सन्निकर्षात्।**

---

प्रधानक्रमसद्भावमाह—**आग्नेयेति**। **पौर्वापर्यादिति**। आग्नेययागस्य पूर्वम् ऐन्द्रयागस्य तदनन्तरं च कर्तव्यत्वादित्यर्थः। पूर्वोक्तामुपपत्तिमत्र प्रदर्शयति—**एवं चेति**। **एकेति**। अन्तरितो व्यवधानप्रयोजको मध्ये स्थितः पदार्थः। एकोऽन्तरितो यस्मिन् व्यवधाने तदेकान्तरितम्। एवमुत्तरत्रापि। व्युत्क्रमेण प्रधानक्रमानादरेण। पूर्वमैन्द्रहविषः पश्चादाग्नेयहविषश्चाभिघारणे कृत इत्यर्थः। अस्य मुख्यप्रमाणकस्य क्रमस्य पूर्वोक्तपाठप्रमाणकक्रमापेक्षया दौर्बल्यमाह—**स चेति**। तत्र युक्तिमाह—**मुख्येति**। **प्रमाणान्तरेति**। मन्त्रपाठब्राह्मणपाठान्यतरसापेक्षो यः प्रधानानां क्रमस्तत्प्रतिपत्तिसापेक्षतयेत्यर्थः। **पाठक्रमस्त्विति**। पाठप्रमाणकः क्रम इत्यर्थः। **निरपेक्षेति**। निरपेक्षो यः स्वाध्यायपाठक्रमस्तन्मात्रेत्यर्थः। **न तथेति**। न विलम्बितप्रतीतिक इत्यर्थः। अत्रोदाहरणम्—आग्नेयोपांशुयाजाग्नीषोमीयेषु क्रमेणानुष्ठीयमानेष्वपि उपांशुयाजाज्यनिर्वापो मुख्यक्रमाद् अग्नीषोमीयव्रीहिनिर्वापात् पूर्वं नानुष्ठीयते। मुख्यक्रमस्य दुर्बलत्वात्। किन्तु पाठक्रमात् ततः पश्चादनुष्ठीयते। पाठक्रमस्य प्रबलत्वादिति। इदानीं मुख्यक्रमस्यैव स्वानन्तरप्रवृत्तिक्रमात् प्राबल्यमाह—**स चायमिति**। प्रवृत्तिक्रमाच्चेति। चकारो भिन्नक्रमः। **प्रवृत्तिक्रमाद् बलवांश्चेति**। तत्र युक्तिमाह—**प्रवृत्तीति**। प्रवृत्तिक्रमे अङ्गानां मिथः साहित्यरक्षणं तन्त्रम्। मुख्यक्रमे तु अङ्गानां प्रधानसाहित्यरक्षणं तन्त्रम्। तस्मान्मुख्यक्रमः प्रबल इति संक्षेपः। निरूपयिष्यमाणः प्रवृत्तिक्रमश्चात्र सम्यक् चिन्तनीयः।

॥ प्रवृत्तिक्रमः ॥

**सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्याऽनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः। यथा प्राजापत्यपश्वङ्गेषु। प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः। अतस्तेषां तदङ्गानां चोपाकरणनियोजनादीनां साहित्यं सम्पाद्यम्। तच्च प्राजापत्यपशूनां सम्प्रतिपन्नदेवताकत्वेन युगपदनुष्ठानादुपपद्यते। तदङ्गानां चोपाकरणादीनां युगपदनुष्ठानम-**

---

प्रवृत्तिक्रमं लक्षयति—**सहेति**। अत्र द्वितीयादिपदार्थानामित्येतदारभ्य लक्षणमुच्यते। ननु एकैकः पदार्थः सकृदनुष्ठेयः, तत्र का क्रमापेक्षेत्यत्र, यत्र एकैकः पदार्थो बहुकृत्वोऽनुष्ठेयो भवति तत्रैवायं प्रवृत्तिक्रम इति समाधानाभिप्रायेणोक्तम् **आवृत्त्याऽनुष्ठाने कर्तव्य इति**।

ननु कुत्राङ्गानामावृत्त्याऽनुष्ठानमित्यत्रोक्तम्—**सह प्रयुज्यमानेषु प्रधानेष्विति** अनेकेषु यागेषु एकस्मै फलाय एकेन प्रयोगेण क्रियमाणेषु तत्सम्बन्धीन्यङ्गानि प्रतिप्रधानम् आवृत्त्या अनुष्ठेयानि भवन्तीत्यर्थः। तत्र प्रयाजादीनामारादुपकारकाणां तन्त्रत्वेन आवृत्त्यभावादुक्तम्—**सन्निपातिनामिति**। **प्रथमानुष्ठितेति**। एतेन प्रथमानुष्ठानं प्रवृत्तिरिति व्याख्यातं भवतीति ज्ञेयम्। **प्रवृत्तिक्रम इति**। प्रवृत्तिप्रमाणकः क्रम इत्यर्थः। उदाहरणमाह—**यथेति**। सप्तदश प्राजापत्यान् पशूनालभत इति वाक्येन विहिताः सन्ति सप्तदश प्राजापत्याः पशवः। तेषां चाङ्गानि उपाकरणनियोजनादीनि। तत्र यस्मात्कस्माच्चित्पशोरारभ्य सर्वेषां पशूनामुपाकरणं कर्तव्यम्। अनन्तरं तेनैव क्रमेण सर्वेषां नियोजनादिकमपि क्रियत इति तत्र प्रवृत्तिक्रम इत्यर्थः।

ननु प्रथमम् एकस्यैव पशोः सर्वम् उपाकरणनियोजनादिकमङ्गजातं कृत्वा अनन्तरमन्यस्य सर्वम् अनन्तरमन्यस्य सर्वमित्येव कस्मान्न क्रियत इत्याशङ्कां परिहर्तुमाह—**प्राजापत्या हीति**। नन्वस्मिन् वाक्ये इतिकर्तव्यतावाचकपदाभावात् कथं सेतिकर्तव्यताकानाम् एककालत्वमित्यत्रोक्तम्—**तृतीयानिर्देशादिति**। यत्र प्रधानस्य द्वितीयया निर्देशस्तत्र विधेयस्य प्रधानमात्रेऽन्वयः। यत्र तु तृतीयया निर्देशस्तत्र साङ्ग एव प्रधानेऽन्वय इति स्थितो न्यायः। तेनात्र पशुयागानां प्राजापत्यैरिति तृतीयानिर्देशाद् वैश्वदेवीं कृत्वेति वैश्वदेव्युत्तरकालस्य विधेयस्य साङ्गेष्वेव

**शक्यम् । अतस्तेषां साहित्यमव्यवहितानुष्ठानात्सम्पाद्यम् । तत्रैक-स्योपाकरणं विधायापरस्योपाकरणं विधेयम् । एवं नियोजनादिकमपि । तथा च प्राजापत्येषु कस्माच्चित्पशोरारभ्य एक एव सर्वत्रानुष्ठाय द्वितीयादिपदार्थस्तेनैव क्रमेणानुष्ठेयः । स प्रवृत्तिक्रमः । सोऽयं श्रुत्या-दिभ्यो दुर्बलः । तदेवं सङ्क्षेपतो निरूपितः षट्विधक्रमनिरूपणेन प्रयोगविधिः ।**

---

तेष्वन्वय इति भावः । **एककालत्वेनेति ।** सप्तदशापि यागा युगपत्कर्तव्याः सप्तदशानां पशूनामुपाकरणं युगपत्कर्तव्यम् । एवं नियोजनादिकमपि युगपत्कर्तव्यमिति विधीयत इत्यर्थः । एवं साङ्गानामेककालत्वेन विहितत्वात् प्रधानेष्वपि एककालत्वरूपं साहित्यं सम्पाद्यमित्याह—**अत इति ।** तत्र प्रकृतोपयोगितया अङ्गानां साहित्यमन्यादृशमित्युपपादयिष्यन् प्रधानानां यथाश्रुतं साहित्यमुपपन्नमित्याह—**तच्चेति ।** साहित्यं चेत्यर्थः । **सम्प्रतिपन्नेति ।** प्रजापतिरूपैकदेवताकत्वेनेत्यर्थः । इदानीमङ्गेषु यथाश्रुतं साहित्यमनुपपन्नमित्याह—**तदङ्गानां चेति ।** प्राजापत्याङ्गानां चेत्यर्थः । **युगपदिति ।** उपाकरणस्य एकस्मिन्नेव काले सर्वेषु पशुषु अनुष्ठानमशक्यम् । एवं नियोजनादीनामित्यर्थः । तर्हि कथं साहित्यसम्पादनमित्यत्राह—**अत इति ।** आनन्तर्य-रूपं साहित्यमित्यर्थः । अव्यवहितानुष्ठानमेव उदाहरणे प्रदर्शयति—**तत्रेति ।** **एवमिति ।** एकस्य कृत्वा अपरस्य कर्तव्यमित्यर्थः । एवं सर्वेषु पशुषु प्रोक्षणादेरेकै-कस्याङ्गस्य आनन्तर्यपर्यवसितस्य साहित्यस्य बोधनात् सर्वेषां पशूनां प्राथमिकमङ्गं कृत्वैवानन्तरमङ्गमनुष्ठेयं न त्वेकस्यैव पशोः सर्वाङ्गानुष्ठानम् । तथा प्रथमपदार्था-नुष्ठानक्रमेण द्वितीयादिपदार्थाः कर्तव्या इति सिद्ध्यत्यत्र प्रवृत्तिक्रम इति पूर्वोक्त-शङ्कां परिहरन्नाह **तथा चेति ।** एवमेकस्यैवाङ्गस्य अङ्गिभेदेनाभ्यासे कर्तव्ये यत्साहित्यं प्रयोगविधिप्रमेयं तदिह पदार्थानुसमयनिर्वाहकतया प्रतिपादितम् । प्रथम-पदार्थानुष्ठानक्रमेणैव द्वितीयादिपदार्थाः कर्तव्या इति प्रवृत्तिक्रमस्य, एकैकाङ्गस्य अङ्गान्तरेण यत्साहित्यं तन्नियामकम् । तदुपपादनं त्वत्र ग्रन्थकारो विस्तर-भियोपेक्षितवानिति ज्ञेयम् । अस्य चरमस्य क्रमप्रमाणस्य सर्वपूर्वप्रमाणापेक्षया दौर्बल्यमाह—**सोऽयमिति ।** प्रयोगविधिमुपसंहरति—**तदेवमिति ।** **क्रमनिरूपणेनेति ।** लक्षणस्यापि निरूपणान्तर्गतत्वेऽपि क्रमनिरूपणस्यैव विस्तृतत्वात् तन्मात्रोक्तिः ।

**॥ इति प्रयोगविधिप्रकरणम् ॥**

॥ अथाधिकारविधिः ॥

**कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः। कर्मजन्यफलस्वाम्यं कर्मजन्यफलभोक्तृत्वम्। स च यजेत स्वर्गकाम इत्यादिरूपः। स्वर्गमुद्दिश्य यागं विदधताऽनेन स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। यस्याऽऽहिताग्नेरग्निर्गृहान् दहेत्सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदित्यादिनाऽग्निदाहादौ निमित्ते कर्म विदधता निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते। एवमहरहः सन्ध्यामुपासीतेत्यादिना शुचिविहितकालजीविनः सन्ध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं बोध्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारविशिष्टः। अधिकारश्च यद्विधिवाक्येषु पुरुषविशेषणत्वेन**

---

अधिकारविधिं निरूपयति—**कर्मेति**। कर्मजन्यं यत्फलं तस्य स्वाम्यमिति। **अधिकारेति**। अधिकारः फलस्वाम्यमिति पार्थसारथिः। स्वाम्यशब्दार्थं विवृणोति—**कर्मेति**। उदाहरणमाह—**स चेति**। अस्य फलभोक्तृत्वमुपपादयति—**स्वर्गमिति**। तत्र हि स्वर्गभाव्यका यागभावना स्वर्गकामकर्तृका इति बोधः। आत्मनेपदेन च स्वर्गकामनिष्ठस्य कर्तृत्वस्य फलसामानाधिकरण्यं भासते। एवं च फलसमानाधिकरणकर्तृत्वबोधे कर्तुः फलवत्त्वबोधात् तस्य च फलस्य स्वर्गपदेन स्वर्गरूपत्वावगमात्। अयं च विधिः स्वर्गकामनावतः स्वर्गरूपफलभोक्तृत्वबोधको भवतीत्यर्थः। अयं च काम्याधिकारविधिः। अथ नैमित्तिकाधिकारविधिमुदाहरति—**यस्येति**। **कर्मेति**। कर्मजन्यः यः पापक्षयः तद्रूपं फलं तत्स्वाम्यमिति। यद्यप्यस्मिन्वाक्ये फलं न श्रूयते तथापि धर्मेण पापमपनुदतीत्यादिना कल्प्यत इति यावज्जीवाधिकरणे द्रष्टव्यम्। अथ नित्याधिकारविधिमुदाहरति—**एवमिति**। **शुचीति**। सायंप्रातःकालरूपे विहिते काले जीवतीति विहितकालजीवी शुचिश्चासौ विहितकालजीवी च तस्य पुरुषस्येत्यर्थः। **सन्ध्येति**। सन्ध्योपासनेन जन्यः परिपाल्यः प्रत्यवायपरिहारस्तद्रूपफलस्वाम्यमित्यर्थः। अकरणे हि प्रत्यवायो भवेत्। करणे च तस्य परिहारः, अनुत्पत्तिर्भवतीत्यर्थः। इदं च केषाञ्चिन्मतेन। वस्तुतस्त्वत्रापि पापध्वंस एव फलमिति बोध्यम्। प्रत्यवायपरिहार इत्यस्यैव वा पापध्वंस एवार्थ इत्यन्यत्र विस्तरः। तत्तद्विधिप्रमेयमुक्तविधं फलस्वाम्यं न सर्वेषां किन्तु केषाञ्चिदेव व्यवस्थितमिति प्रतिपादयन्नाह—**तच्चेति**। **अधिकारेति**। अत्र अधिकारो योग्यता।

**श्रूयते। यथा काम्ये कर्मणि फलकामना नैमित्तिककर्मणि निमित्तनिश्चयः। नित्ये सन्ध्योपासनादौ शुचिविहितकालजीवित्वम्। अत एव राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन विधिवाक्येन स्वाराज्यमुद्दिश्य राजसूयं विदधताऽपि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते। किन्तु राज्ञः सतः स्वाराज्यकामस्यैव, राजत्वस्यापि अधिकारिविशेषणत्वेन श्रवणात्।**

**क्वचित् तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणम्। यथा अध्ययनविधिसिद्धा विद्या। क्रतुविधीनामर्थज्ञानापेक्षत्वेनाध्ययनविधि-**

---

ननु कोऽत्र योग्यतारूपोऽधिकार इत्यत्राह—**अधिकारश्चेति**। अधिकारश्च[1] तदेव यत्.... ....इत्येव पाठः श्रेयान्। यथास्थितेऽपि तदेवेत्यध्याहृत्य योज्यम्। उदाहृतेषु त्रिषु कर्मसु पुरुषविशेषणं दर्शयति—**यथेति**। स्वर्गकामपदेन स्वर्गविषयककामनावत्पुरुषाभिधानात् स्वर्गकामना तत्र विशेषणम्, अज्ञातस्य निमित्तस्य अनुष्ठापकत्वायोगात् 'स्वगृहदाहज्ञानवान् पुरुषः अग्नये क्षामवते निर्वपे'दित्येव वचनार्थाद् गृहदाहरूपनिमित्तनिश्चयोऽपि पुरुषविशेषणम्। अहरहरित्यत्रापि विहिते काले अजीवतोऽनुष्ठानायोगाद् अशुचित्वे कर्मनिषेधाच्च शुचिर्जीवंश्च अहरहस्सन्ध्यामुपासीतेत्यर्थपर्यवसानात् शुचित्वजीवनयोः पुरुषविशेषणत्वं द्रष्टव्यम्। एवञ्च यजेत स्वर्गकाम इत्यत्र यागे स्वर्गकामनावत एव फलभोक्तृत्वम्, न तत्कामनारहितस्य; गृहदाहवत एव क्षामेष्टौ फलवत्त्वं न तद्रहितस्य; शुचेर्जीवत एव सन्ध्योपासने फलभाक्त्वं नाशुचेरजीवतो वेति एवं त्रैवर्णिकसाधारणं पुरुषविशेषणं प्रदर्श्य सम्प्रति असाधारणं विशेषणं प्रदर्शयति—**अत एवेति**। पुरुषविशेषणत्वेन श्रुतो यो धर्मस्तद्रूपाधिकारवत एव फलस्वाम्यादित्यर्थः। **विदधताऽपीति**। यजेत स्वर्गकाम इत्यत्र स्वर्गकामनाया इवात्र स्वाराज्यकामनायाः पुरुषविशेषणत्वेन श्रवणात् तन्मात्राद् यद्यपि यो यः स्वाराज्यं कामयते स सर्वो राजसूये फलभोक्तेति प्रतीयते, तथापि राजेति राजत्वरूपस्य विशेषणान्तरस्यापि श्रवणाद् न स्वाराज्यकामस्य ब्राह्मणादेरत्र फलस्वामित्वं किन्तु राज्ञ एवेत्यर्थः। **अधिकारीति**। फलभोक्तृपुरुषेत्यर्थः। एवं तत्तद्विधिवाक्येषु श्रुतं पुरुषविशेषणमुक्त्वा तथाऽश्रुतमपि विशेषणमस्तीत्याह—**क्वचित्त्विति**।

---

१. स एवेति वा।

**सिद्धार्थज्ञानवन्तं प्रत्येव प्रवृत्तेः। एवमग्निसाध्यकर्मसु आधानसिद्धाग्निमत्ता। अग्निसाध्यकर्मणामग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः।**

**एवं सामर्थ्यमपि। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् समर्थं प्रत्येव विधिप्रवृत्तेः। तदेवं निरूपितो विधिः।**

**॥ इत्यधिकारविधिप्रकरणम् ॥**

---

**अधिकारिविशेषणम्** अधिकार इत्यर्थः। योग्यतेति यावत्। तत्प्रदर्शयति—**यथेति**। विद्या ज्ञानम्।

ननु विद्याया अश्रुतत्वे पुरुषविशेषणत्वे किं मानमित्यत्र वस्तुसामर्थ्यमेव तत्र मानमित्यभिप्रेत्याह—**क्रत्विति**। विशेषणान्तरमाह—**एवमिति**। पूर्वोक्ता विद्या सर्वकर्मस्वपेक्षिता अग्निस्तु न तथेत्यभिप्रेत्याह—**अग्निसाध्यकर्मस्विति**। विशेषणान्तरमाह—**एवमिति**। तत्रोपपत्तिमाह—**आख्यातानामिति**। विधिनिरूपणमुपसंहरति—**तदेवमिति**।

**॥ इति विधिपरिच्छेदस्तृतीयः ॥**



## ॥ अथ मन्त्रपरिच्छेदः ॥

प्रयोगसमवेतार्थस्मारका मन्त्राः । तेषां च तादृशार्थस्मारकत्वेनैवार्थवत्त्वम् । न तु तदुच्चारणमदृष्टार्थम् । सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात् । न च दृष्टस्यार्थस्मरणस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नानं व्यर्थमिति वाच्यम् । मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात् । नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिर्नियमविधिः । यथाहुः —

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥ इति ।

॥ अपूर्वविधिनियमविध्योर्लक्षणोदाहरणम् ॥

अस्यार्थः—प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिरपूर्वविधिः, यथा-यजेत स्वर्गकाम इत्यादिः । स्वर्गार्थयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात् ।

---

मन्त्रानुपलक्षयति--**प्रयोगेति**। ननु प्रयाजादिवन्मन्त्रोच्चारणमदृष्टार्थं स्यादित्यत्राह—**तेषां चेति** । मन्त्राणां चेत्यर्थः । तादृशेति । प्रयोगसमवेतेत्यर्थः। तदुच्चारणं मन्त्रोच्चारणम् । तत्र न्यायमाह—**सम्भवतीति** । दृष्टफलकत्वे मन्त्राणां वैयर्थ्यमाशङ्क्य परिहरति--**आश्रयणादिति** । अङ्गीकारादित्यर्थः ।

ननु को नियमविधिरित्यत्राह—**नानेति** । प्रामाण्यदाढर्याय विधित्रयलक्षणप्रतिपादकं वार्तिकग्रन्थमुदाहरति—**यथाऽऽहुरिति** । विधिरित्यपूर्वविधिरुच्यते । श्लोकं व्याख्यातुमाह—**अस्यार्थ इति** । विधेयेऽर्थे मानान्तरेण सर्वथाऽप्राप्ते सति तद्विधानाय प्रवृत्तो यो विधिः सोऽपूर्वविधिरिति प्रथमपादार्थ इत्यभिप्रायेणाह—**प्रमाणान्तरेणेति** । उदाहरणमाह—**यथेति** । लक्षणं सङ्गमयति—**स्वर्गार्थेति** ।

**पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः। यथा—व्रीहीनवहन्तीत्यादिः। कथमस्य पक्षेऽप्राप्तप्रापकत्वमिति चेदित्थम्। अनेन ह्यवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते। अन्वयव्यतिरेकसिद्धत्वात्। किन्तु नियमः। स चाप्राप्तांशपूरणम्। वैतुष्यस्य हि नानोपायसाध्यत्वाद्यदाऽवघातं परित्यज्य उपायान्तरं ग्रहीतुमारभते तदाऽवघातस्याप्राप्तत्वेन तद्विधाननामकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षेऽप्राप्तावघातस्य विधानमिति यावत्।**

**॥ परिसङ्ख्याविधिः ॥**

**उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा—पञ्च पञ्चनखा भक्ष्या इति। इदं हि वाक्यं न पञ्च-**

---

नियमः पाक्षिके सतीत्यस्य तात्पर्यमाह—**पक्ष** इति। उदाहरति—**यथेति**। लक्षणसङ्गमनाय प्रश्नप्रतिवचने करोति—**कथमिति, इत्थमिति च**। अपूर्वविधित्वं नास्तीत्याह—**अनेन ह्येति**। **किन्त्विति**। प्रतिपाद्य इत्यनुषञ्जनीयम्। अवघातेनैव व्रीहीणां वैतुष्यं कर्तव्यमिति नियम इति वैयाकरणरीत्या इतरनिवृत्तिपरत्वं न ग्रहीतव्यमित्यभिप्रेत्य व्याचष्टे—**स चेति**। **अप्राप्तांश इति**। अंशो विधेयतावच्छेदकधर्मावच्छिन्नव्यक्तिविशेषः। पूरणं विधानम्। अप्राप्तत्वं तादृशांशपूरकत्वं चोपपादयति—**वैतुष्यस्येति**। **नानेति**। नखविदलनाश्मकुट्टनावघातादिरूपतया बहुविधेत्यर्थः। एवं कदाचिदप्राप्तार्थविधायकस्य नियमविधेरत्यन्ताप्राप्तार्थविधायकादपूर्वविधेः स्फुट एव भेद इत्यभिप्रेत्याह—**अतश्चेति**। **नियम एवेति**। न त्वपूर्वविधानमित्येवकारार्थः। **वाक्यार्थ** इति। वाक्यतात्पर्यविषय इत्यर्थः। स्पष्टत्वायैव प्रकृतोदाहरणे नियमं विवृणोति **पक्ष इति**।

तत्र चान्यत्र च प्राप्त इत्युत्तरार्धं विवृणोति—**उभयोश्चेति**। प्रकृतोद्देश्यविधेयान्यतरस्य तदितरस्य चेत्यर्थः। उदाहरति—**यथेति**। अपूर्वविधित्वमस्य न भवतीत्याह—**इदं ह्येति**। नियमविधित्वं नास्तीत्याह—**नापीति**। हेतुमाह—**पञ्चेति**। नियमविधि-

पञ्चनखभक्षणपरम्। तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्। पञ्चपञ्चनख, पञ्चेतरपञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षे प्राप्त्यभावात्। अत इदम् अपञ्चपञ्चनखभक्षणनिवृत्तिपरमिति परिसङ्ख्याविधिः। सा च द्विधा—श्रौतो लाक्षणिको चेति। तत्र 'अत्र ह्येवाऽऽवपन्ती'ति श्रौती परिसङ्ख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। पञ्च पञ्चनखा भक्ष्या इति तु लाक्षणिकी। इतरनिवृत्तिवाचकपदाभावात्। अत एवैषा त्रिदोषग्रस्ता। दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। तदुक्तम्—

श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा॥ इति।

श्रुतस्य पञ्चपञ्चनखभक्षणस्य हानात्, अश्रुताया अपञ्चपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चापञ्चपञ्चनखभक्षणस्य

---

स्थलेऽवघातादेर्विधेयस्य नखविदलनाद्युपायान्तरानुष्ठानावसरे यथाऽप्राप्तिः, तथात्रापञ्चपञ्चनखभक्षणावसरे पञ्चपञ्चनखभक्षणाप्राप्तिर्नास्ति। किन्तु रागत उभयोरपि प्राप्तिरित्यर्थः। एवमपूर्वविधित्वनियमविधित्वयोरुभयोरसम्भवात्परिसङ्ख्याविधित्वमेवास्येत्याह—**अत इति**। **अपञ्चेति**। पञ्च च ते पञ्चनखाश्च। न पञ्चपञ्चनखाः अपञ्चपञ्चनखाः। न पञ्च अपञ्च। ते च ते पञ्चनखाश्च अपञ्चपञ्चनखा इति वा। **तद्भक्षणेति**। शल्यकश्वाविद्गोधाशशकूर्मरूपपञ्चपञ्चनखभिन्ना ये पञ्चनखाः प्राणिनस्तद्भक्षणेति यावत्। पञ्चेतरपञ्चेति च पाठः। अत्र सर्वत्र एकपञ्चपदपरित्यागेन दृश्यमानः पाठोऽनुपपन्नः, अर्थव्युत्पन्नैः पौनरुक्त्यभ्रान्त्या प्राचीनपाठान्यथाकरणेन कल्पित इति मन्यामहे। परिसंख्यां विभजते—**सा चेति**। **श्रौतोति**। पदेन शक्त्या प्रतिपादितेत्यर्थः। आद्यामुदाहरति—**तत्रेति**। अत्रैव, पवमानस्तोत्रसम्बन्धिनीषु ऋक्ष्वेवेत्यर्थः। आवपन्ति, साम घटयन्तीत्यर्थः। श्रौतत्वमुपपादयति—**एवेति**। पूर्वोक्तमेव द्वितीयस्याप्युदाहरणमित्याशयेनाह—**पञ्चेति**। कुतो न श्रौतीत्यत्राह—**इतरेति**। अपञ्चपञ्चनखभक्षणनिवृत्तीत्यर्थः।

**बाधनादिति । अस्मिश्च दोषत्रये दोषद्वयं शब्दनिष्ठम् । प्राप्तबाधस्त्वर्थनिष्ठ इति दिक् । येषां तु प्रयोगसमवेतार्थस्मारकत्वं न सम्भवति तदुच्चारणस्यानन्यगत्याऽदृष्टार्थकत्वं कल्प्यत इति नानर्थक्यमिति ॥**

---

ननु कथं लक्षणादोषो विधावङ्गीक्रियत इत्यत्र न केवलमेको दोषः; किन्तु दोषत्रयमगत्याऽङ्गीक्रियत इत्याह—**अत एवेति**। लाक्षणिकत्वादेवेत्यर्थः। किं तद्दोषत्रयमित्यत्राह—**दोषेति**। उक्तमेव प्राचोनश्लाकेनाह—**तदुक्तमिति**। प्रकृतोदाहरणे दोषत्रयं दर्शयति—**श्रुतस्येति**। दाषत्रयविवेकमाह—**अस्मिश्चेति**। ननु मन्त्राणामर्थस्मारकत्वेन दृष्टार्थत्वे हुंफडादिमन्त्राणाम् अर्थशून्यत्वेन तत्स्मारकत्वासम्भवादानर्थक्यम्। तेषां चेददृष्टार्थत्वं सर्वेषामेव च तथात्वं कुतो नेष्यते। न खल्वर्धजरतीयता युक्तेत्याशङ्कायां सत्यपि वैरूप्ये सम्भवदर्थानां मन्त्राणां दृष्टार्थत्वं न परित्याज्यम्। न ह्येकमक्षि न पश्यतीत्यक्ष्यन्तरस्याप्यान्ध्यं सम्पादनीयम्। अर्थशून्यानान्त्वगत्याऽदृष्टार्थत्वान्नानर्थक्यमिति समादधान आह—**येषान्त्विति**।

**॥ इति मन्त्रपरिच्छेदश्चतुर्थः ॥**



## ॥ अथ नामधेयपरिच्छेदः ॥

**नामधेयानां च विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम्। तथा हि। उद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दो यागनामधेयम्। तेन च विधेयार्थपरिच्छेदः क्रियते। तथा हि। अनेन वाक्येनाप्राप्तत्वात् फलोद्देशेन यागो विधीयते। यागसामान्यस्याविधेयत्वाद् यागविशेष एव विधीयते। तत्र कोऽसौ यागविशेष इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति विज्ञायते। उद्भिदा यागेन पशुं भावयेदित्यत्र सामानाधिकरण्येन नामधेयान्वयात्। नामधेयत्वं च निमित्तचतुष्टयात्—मत्वर्थलक्षणाभयात्, वाक्यभेदभयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति।**

---

नामधेयं निरूपयन् तस्य लक्षणमभिप्रेत्याह—**नामेति**। बहुवचनमनपेक्षितम्। परिच्छेदकत्वम्, अयमिति निश्चयजनकत्वम्। यद्यपि विधेयार्थपरिच्छेदकं नामधेयमित्येव वक्तुमुचितम्, तथापि आपदेवीयानुसारेणैवमुक्तिरिति ज्ञेयम्। लक्ष्ये लक्षणं सङ्गमयितुमाह—**तथा हीति**। अस्मिन्वाक्ये उद्भिच्छब्दो लक्ष्यमित्यभिप्रेत्याह—**उद्भिच्छब्द इति**। तत्र लक्षणमस्तीत्याह—**तेन चेति**। तदिदमुपपादयितुमाह—**तथा हीति**। विधेयार्थं दर्शयति—**अनेन हीति**। विधेयत्वे हेतुर**प्राप्तत्वादिति**। वक्ष्यमाणपरिच्छेदाकांक्षोपपत्तये विधेयस्वरूपनिष्कर्षमाह—**यागसामान्यस्येति**। **यागविशेष एवेति**। वाक्यान्तरविहितसर्वयागविलक्षणः कश्चिद्याग इत्यर्थः। अथ, एवं यागविशेषविधिज्ञाने सति परिच्छेदाकाङ्क्षा भवति, उद्भित्पदेन च तन्निवृत्तिर्भवतीत्याह—**तत्रेति**। यागविशेषस्यैव विधीयमानत्व इत्यर्थः। **उद्भिद्रूप इति**। उद्भिदभिन्नेत्यर्थइत्यनन्तदेवः। ब्राह्मण आगत इत्युक्ते एकवचनवशाद्यः कश्चिदेको ब्राह्मण इति ज्ञातेऽपि यथा कोऽसौ ब्राह्मण इति ब्राह्मणविशेषस्य इदंत्वेन जिज्ञासा जायते। देवदत्त इति नामधेयज्ञानाच्च तन्निवृत्तिर्भवति तद्वदत्रापि द्रष्टव्यम्। ननूद्भिच्छब्दो यागस्य विशेषक इत्यत्र किं मानमित्याशङ्कायां सामानाधिकरण्ये-

॥ मत्वर्थलक्षणाभयान्नामधेयत्वम् ॥

**तत्रोद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात् । तथा हि । न तावदनेन वाक्येन फलं प्रति यागविधानम्, तं प्रति च गुणविधानं युज्यते । वाक्यभेदापत्तेः । उद्भिच्छब्दस्य गुणसमर्पकत्वे च यागस्याप्यप्राप्तत्वाद् गुणविशिष्टकर्मविधानं वाच्यम्—उद्भिद्वता यागेन पशुं भावयेदिति । विशिष्टविधौ च मत्वर्थलक्षणेत्युक्तमेव ।**

॥ वाक्यभेदभयान्नामधेयत्वम् ॥

**चित्रया यजेत पशुकाम इत्यत्र चित्राशब्दस्य कर्मनामधेयत्वं वाक्यभेदभयात् । तथा हि । न तावदत्र गुणविशिष्टयागविधानं सम्भवति । दधि मधु पयो घृतं धाना उदकं तण्डुलाः, तत्संसृष्टं प्राजापत्यमित्यनेन यागस्य विहितत्वात् तद्विशिष्टयागविध्यनुपपत्तेः । (प्राप्त) यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः । तस्माच्चित्रा-**

---

नान्वय एव मानमित्याह—**उद्भिदेति** । अत्रास्मिन्वाक्ये उद्भिदा यागेनेति सामानाधिकरण्येनान्वयादित्यन्वयः । सामानाधिकरण्यम् एकार्थवाचित्वम् । एवं नामधेयस्य विधेयार्थपरिच्छेदकत्वमुपपादितम् । अथ नामधेयप्रमाणानि निरूपयति—**नामधेयत्वं चेति** । आद्यनिमित्तकृतं नामधेयत्वमुदाहरति—**तत्रेति** । उपपादयति—**तथा हीति** । नामधेयत्वाभावे उद्भित्पदं गुणविधानपरमिति वक्तव्यम् । तत्र च त्रयी गतिः—फलोद्देशेन यागविधाने सत्येव यागोद्देशेन गुणविधानमिति, यागस्यानुवाद्यत्वमङ्गीकृत्य गुणमात्रविधानमिति, गुणविशिष्टयागविधानमिति । तत्राऽऽद्या गतिः गुरुतरदोषवत्त्वादयुक्तेत्याह—**न तावदिति** । द्वितीयगतेरप्यत्रासम्भवात् तृतीयेव गतिराश्रयणीयेत्याह—**उद्भिदिति** । अस्तु । किं तत्रेत्यत्राह—**मत्वर्थेति** । तथा च तद्दोषपरिहाराय नामधेयत्वमेवाङ्गीकर्तव्यमिति भावः ।

द्वितीयान्निमित्तान्नामधेयत्वमुदाहरति—**चित्रयेति** । गुणविधानपक्षे मत्वर्थलक्षणया विशिष्टविधानाङ्गीकारान्न वाक्यभेदस्य प्रसक्तिरित्याशङ्क्य कर्मणः प्राप्तत्वादत्र विशिष्टविधिर्दुर्वच इति परिहरति—**न तावदिति** ।

**शब्दः कर्मनामधेयम्। तथा च चित्रायागेन पशुं भावयेदिति सामानाधिकरण्येनान्वयान्न वाक्यभेदः। प्रकृतेष्टेरनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वोपपत्तेः।**

**॥ तत्प्रख्यशास्त्रान्नामधेयत्वम् ॥**

**अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात्। तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वाद् अग्निहोत्रशब्दः कर्मनामधेयमिति यावत्। नन्वयं गुणविधिरेव कुतो नेति चेन्न। यद्यग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निरूपो गुणो विधेयस्तदा यदाहवनीये जुहोतीत्यनेनैवाग्नेः प्राप्तत्वात् तद्विधानानर्थक्यम्। अग्नये होत्रमिति चतुर्थीसमासमाश्रित्य अग्निदेवतारूपगुणोऽनेन विधीयत इति चेन्न। तद्देवतायाः शास्त्रान्तरेण प्राप्तत्वात्। किं तच्छास्त्रान्तरमिति चेत्। यदग्नये च प्रजापतये च सायं जुहोतीति केचित्। अपरे त्वग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति मन्त्रवर्णं एवाग्निरूपदेवताप्रापकः। नन्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिदेवतया बाधः स्यात्। मन्त्रवर्णस्य चतुर्थीतो दुर्बलत्वात्। यथाहुः —**

---

ननु प्राप्तस्यैव यागस्य फलसम्बन्धोऽप्यस्तु गुणसम्बन्धोऽप्यस्त्वित्याशङ्क्य वाक्यभेद एव दोष इत्याह—**यागस्येति**। निगमयति—**तस्मादिति**। नामधेयत्वे च वाक्यभेददोषो नास्तीत्याह—**तथा चेति**।

ननु प्रकृतयागस्य चित्रेति कथन्नामधेयमित्यत्राह—**प्रकृतेति**। प्रकृतयागस्येत्यनुक्त्वा प्रकृतेष्टेरिति स्त्रीलिङ्गं प्रयुञ्जानेन चित्रेति स्त्रीलिङ्गस्याप्युपपत्तिर्दर्शिता। **अनेकेति**। अनेकानि द्रव्याणि यस्यास्तत्त्वेन।

तृतीयान्निमित्तान्नामधेयत्वमुदाहरति—**अग्निहोत्रमिति**। तत्प्रख्यशास्त्रादित्येतद्विवृण्वन्नाह—**तस्येति**। विधित्सितस्येति शेषः। गुणविधिरिति पूर्वपक्षमाशङ्क्य परिहरति—**नन्विति**। किमाहवनीयात्मकाग्निरूपगुणस्य विधिः, उत देवतारूपाग्निविधिरिति विकल्पमभिप्रेत्य नाद्य इत्याह—**यदीति**। होत्रं होमः प्रक्षेप इत्यर्थः। अस्मिन्, कर्मणीत्यर्थः। न द्वितीय इत्याह—**अग्नय इति**। तद्देवताया अग्निदेवतायाः

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।
देवताया विधिस्तत्र दुर्बलं तु परं परम् ॥

इति चेत्, न, यदग्नये च प्रजापतये च सायं जुहोतीत्यत्र न केवलं प्रजापतिविधानम् । किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतेः । एवं च न बाधः । केवलप्रजापतिविधानाभावात् । न चात्र समुच्चितोभयविधानमेव कथं नेति वाच्यम् । समुच्चितोभयविधानापेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात् । एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधो अग्न आज्यस्य व्यन्त्वित्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात् समिधो यजतीत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात् कर्मनामधेयानि ।

॥ तद्व्यपदेशात् कर्मनामधेयत्वम् ॥

श्येनेनाभिचरन् यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात्, तेन व्यपदेशादुपमानाद् अन्यथानुपपत्तेरिति यावत् । तथा हि यद्

---

इत्यर्थः । **इतीति** । इति विधिवाक्यमेतच्छास्त्रान्तरमिति केचिद्वदन्तीत्यर्थः । अन्येषां पक्षमाह—**अपरे त्विति** । आहुरिति शेषः । शङ्कते—**नन्विति** । यत्प्रजापतये सायं जुहोतीति केवलप्रजापतिविधाने सति दुर्बलस्य मन्त्रवर्णस्य विरुद्धस्यानपेक्षितत्वाद् बाधः स्यात् । **यदग्नये चेति** । अग्नेरप्यत्रानुवादाद् दुर्बलस्य मन्त्रवर्णस्य प्रवृत्तिमयं विधिरङ्गीकरोतीति प्रतीयते । तस्माद्विरोधाभावान्न बाध इति समादधाति—**नेति** । ननु यथा प्रजापतेर्मानान्तरेणाप्राप्तस्यैवात्र विधिस्तद्वदग्नेरप्यप्राप्तस्यैव विधिरेवास्तु, कुतो मन्त्रवर्णात्प्राप्तस्यैवात्र अनुवाद इत्यङ्गीक्रियत इति शङ्कान्तरं लाघवात्परिहरति—**न चेति** । यद्यप्यग्निहोत्रपदस्य ब्राह्मणवाक्यतोऽग्निप्राप्तिमङ्गीकृत्य नामधेयत्वमुच्यते, तथापि मान्त्रवर्णिकप्राप्तिमप्यङ्गीकृत्य क्वचिन्नामधेयत्वमवश्यम्भावीत्यभिप्रायेणाह—**एवं चेति** ।

चरमान्निमित्तान्नामधेयत्वमुदाहरति—**श्येनेनेति** । तद्व्यपदेशादित्येतद्विवृणोति—**तेनेति** । विधित्सितेन श्येनगुणेनेत्यर्थः । उपमानाद् उपमितिकरणात् श्येनप्रति-

**विधेयं तस्य स्तुतिर्भवति। यद्यत्र श्येनो विधेयः स्यात् तदाऽर्थवादैस्तस्यैव स्तुतिः कार्या। यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्त इत्यनेनार्थवादेन श्येनः स्तोतुं न शक्यः। श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात्। न च श्येनोपमानेन स एव स्तोतुं शक्यते। उपमानोपमेयभावस्य भिन्ननिष्ठत्वात्। यदा तु श्येनसंज्ञको यागो विधीयते तदाऽर्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येनशब्दः कर्मनामधेयं तद्व्यपदेशादिति।**

**॥ पञ्चमनामधेयनिमित्तनिरासः॥**

**उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयनिमित्तमिति केचित्। यथा वैश्वदेवेन यजेतेत्यादौ। अत्रोत्पत्तिशिष्टाग्न्यादीनां बलीयस्त्वाद्वैश्वदेवशब्दस्य विश्वदेवदेवताविधायकत्वं न सम्भवतीति कर्म-**

---

यौगिकसादृश्यादित्यर्थः। नन्वस्तु श्येनेन व्यपदेशः, तेन श्येनपदस्य नामेधयत्वमिति कथमित्यत्राह—**तदिति**। तस्य श्येनोपमानस्य। अन्यथा नामधेयत्वानङ्गीकारेण गुणविधायकत्वाङ्गीकारेऽनुपपत्तेरित्यर्थः। अनुपपत्तिमुपपादयति—**तथा हीति**। न्यायं शिक्षयति—**यद्विधेयमिति**। एवं च व्यपदेशस्यार्थवादत्वात्तस्य च विधेयार्थस्तावकत्वस्य वक्तव्यत्वात् श्येनपक्षिविधाने सति तत्स्तावकत्वमस्यावश्यंभावीति भावः। तच्चानुपपन्नमित्याह—**यथा वेति**। कस्मान्न शक्य इत्यत्र यथा श्येन एवमयमिति उपमानवाचिना पदेन श्येनातिरिक्तस्य स्तुतिप्रतीतेरिति हेतुमाह—**श्येनेनेति**। न केवलमर्थान्तरस्तुतिप्रतीत्या श्येनस्तुत्यसम्भवः किन्तु अशक्यत्वादपीत्याह। **न चेति**। हेतुमाह—**उपमानेति**। सादृश्यस्य भेदघटितत्वादित्यर्थः। श्येनपदस्य कर्मनामधेयत्वे उक्तानुपपत्तिर्नास्तीति वदन् उपसंहरति—**यदा त्विति**।

तस्य यागस्य अनादरणीयत्वख्यापनाय पञ्चममपि नामधेयनिमित्तं केचिदिच्छन्तीत्याह—**उत्पत्तीति**। उदाहरति—**यथेति**। उपपादयति—**अत्रेति**। **उत्पत्तीति**। आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् इत्यष्टसु यागेषु

**नामधेयत्वम् । वस्तुतस्तु तत्प्रख्यशास्त्रादेवास्य कर्मनामधेयत्वम् । प्रकृतयागे विश्वदेवरूपगुणसमर्पकशास्त्रस्यार्थवादरूपस्यैव सत्त्वात् । यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् इति ।**

---

आमिक्षाव्यतिरिक्तानाम् उत्पत्तौ विहिता या अग्न्यादयो देवतास्तासां बलीयस्त्वादित्यर्थः । अस्मिन्मते अनादरं सूचयन्नाह—**वस्तुतस्त्विवति** । किं तच्छास्त्रमित्यत्राह—**प्रकृतेति** । अस्मादर्थवादरूपात् शास्त्राद् विश्वेषां देवानां कर्तृत्वेन प्राप्तिरिति ध्येयम् ।

**॥ इति नामधेयपरिच्छेदः पञ्चमः ॥**



## ॥ अथ निषेधपरिच्छेदः ॥

**पुरुषस्य निवर्तकं वाक्यं निषेधः । निषेधवाक्यानामनर्थहेतुक्रिया-निवृत्तिजनकत्वेनैवार्थवत्त्वात् । तथा हि । यथा विधिः प्रवर्तनां प्रति-पादयन् स्वप्रवर्तकत्वनिर्वाहाय विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्तयति , तथा न कलञ्जं भक्षयेदित्यादिनिषेधोऽपि निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्ट-साधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति ।**

---

निषेधं निरूपयति—**पुरुषस्येति** । निवर्तकं निवृत्तिजनकम् । नन्वत्र कस्य सकाशान्निवृत्तिजनकत्वं विवक्षितम् । किञ्च, निषेधवाक्यस्य निवर्तकत्वं किमर्थ-मङ्गीकर्तव्यम् ? यस्य पुरुषस्य स्वयमेव निवृत्तिर्भवति तदनुवादकत्वमेव कस्मान्न भवतीत्याशङ्काद्वयं परिहरन्नाह—**निषेधेति** । अर्थः इष्टं स्वर्गादिः, अनर्थो नरकादि-रूपमनिष्टम्, तद्धेतोः क्रियाया निवृत्तिः । एतेन प्रथमाशङ्कापरिहारः —**एवार्थवत्त्वा-दिति** । अन्यथाऽनुवादत्वाङ्गीकारेऽध्ययनविध्युपात्तानामेषां वैयर्थ्यमेव स्यादिति भावः । एतेनान्तिमाशङ्कापरिहारः । अनर्थहेतुक्रियातो निवृत्तिजनकत्वमुपपादयति—**तथा हीति** ।

ननु न कलञ्जं भक्षयेदित्यादिषु निषेधवाक्येषु अनर्थवाचिनः पदस्याभावात् कथमनर्थहेतुत्वावगमः क्रियाया इत्याशङ्कायां निवर्तनावाचकनञ्समभिव्याहृतलिङ्-श्रुतिबलादेव तदवगम इति समादधानः सदृष्टान्तमाह—**यथेति** । **निर्वाहार्थमिति** । प्रवृत्तिं प्रति हि इष्टसाधनताज्ञानं कारणम् । तदजनने पुरुषस्य प्रवृत्त्यसम्भवात् स्वस्य प्रवर्तकत्वं भज्येतेति भावः । इष्टापत्तिस्तु न शक्या कर्तुम् । प्रवर्तनाप्रतिपादकत्वेन प्रवर्तकत्वस्यावश्यम्भावात् । अनेनैवाभिप्रायेणोक्तम्—**प्रवर्तनां प्रतिपादयन्निति** । **आक्षिपन्निति** ।

ननु न सर्वो विधिरेतदाक्षेपकः ; किन्तु फलपदरहितोत्पत्तिवाक्यस्थ एव । फलपदसत्त्वे तेनैव इष्टसाधनत्वस्यावगमेन विधेरनपेक्षितत्वादिति चेन्नैतदेवम् । प्रथमं विधिना इष्टसाधनत्वानाक्षेपे पदश्रुत्या धात्वर्थस्यैव साध्यत्वेनान्वयापत्तेर्भाव्यान्तरा-

**ननु निषेधवाक्यस्य कथं निवर्तनाप्रतिपादकत्वमिति चेदुच्यते । न तावदत्र धात्वर्थस्य नञर्थेनान्वयः, अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः । न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति । अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः । अतः प्रत्ययार्थस्यैव नञर्थेनान्वयः । तत्रापि नाख्यातत्वांशवाच्यार्थभावनायाः । तस्याः लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितेः । किन्तु लिङ्त्वांशवाच्यशब्दभावनायाः । तस्याः सर्वापेक्षया प्रधानत्वात् ।**

---

काङ्क्षाया एवाभावादित्यास्तां तावत् । **स्वनिवर्तकत्वेति** । अनिष्टसाधनताज्ञानमन्तरा निवृत्तेरसम्भवादिति भावः ।

निवर्तनां प्रतिपादयन्निति यदुक्तं तन्नोपपद्यते । न कलञ्जमिति वाक्ये तद्वाचकपदाभावात् । नञोऽभाववाचित्वात् । नामधातुपदयोरप्यर्थान्तरे प्रसिद्धत्वात् । लिङोऽपि प्रवर्तनावाचित्वादित्याक्षिपति—**नन्विति** । नञ्समभिव्याहृता लिङेव तत्प्रतिपादिकेति समाधास्यन् प्रथमं ननु कलञ्जं न भक्षयेदित्येव वाक्यविन्यासस्यात्र वक्तव्यतया तत्र च नञ्प्रत्यययोर्धातुना व्यवधानात् नञ्धात्वोश्च व्यवधानाभावात् 'नो हंस्यात्' इत्यादिषु चाव्यवधानस्य स्पष्टत्वात् नञ्धात्वोरेव सम्बन्धो निषेधवाक्ये वक्तव्यः । न नञ्प्रत्यययोरिति शङ्कां परिहरति—**न तावदिति** । अव्यवधानेऽपीति शङ्काबीजमुक्तम् । तस्य धात्वर्थस्य । प्रत्ययार्थेति प्रत्ययवाच्येत्यर्थः । उपसर्जनत्वेन विशेषणत्वेन ।

ननु प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितो नञर्थान्वयः कस्मान्न भवतीत्यत्र सामान्यन्यायमाह—**न होति** । एतदनङ्गीकारे दोषमाह—**अन्यथेति** । न तावदित्यादिनोक्तं धात्वर्थान्वयासम्भवम् उपसंहरन्नेव सामान्यतः स्वाभिमतप्रत्ययार्थान्वयं प्रतिजानीते—**अत इति** । प्रत्ययेऽपि आख्यातत्वावच्छिन्नवाच्यार्थान्वयो नास्तीत्याह—**तत्रापोति** । **भावनाया इति** । अन्वय इत्यनुषङ्गः । अत्रापि पूर्वोक्तविध एव हेतुरित्यभिप्रेत्याह—**तस्या इति** । आख्यातत्वांशेति, लिङंशेति, आख्यातांशेति लिङ्त्वांशेति च वैरूप्येण पाठः प्रामादिक इति ज्ञेयम् । एवमनभिमतमन्वयं निरस्य सम्प्रति

**नञश्चैष स्वभावो यत्स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम् । यथा घटो नास्तीत्यादौ अस्तीति शब्दसमभिव्याहृतो नञ् घटसत्त्व-विरोधि घटासत्त्वं गमयति । तदिह लिङ्समभिव्याहृतो नञ् लिङर्थ-प्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति । विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवद् निषेधवाक्यश्रवणेऽयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापाररूपनिवर्तनायाः प्रतीतेः । तस्मान्निषेधवाक्यस्थले निवर्तनैव वाक्यार्थः ।**

---

स्वाभिमतमाह—**किन्त्विति** । पूर्वोक्तोऽनन्वयहेतुरत्र नास्तीत्यभिप्रेत्याह—**तस्या इति** । **प्रधानत्वादिति** । अन्योपसर्जनत्वमशक्यशङ्कमित्याशयः ।

नन्वस्त्वेवम् । तावता निवर्तनाप्रतिपादकत्वं कथमित्यत्र समाधानं वदन् नञः प्रकृते विवक्षितमर्थं प्रतिपादयन् तादृशार्थवाचित्वं प्रसिद्धमेवेति सदृष्टान्तमाह—**नञ इति** । **घटासत्त्वमिति** । अत्रेदं बोध्यम्—असत्त्वमिति किं सत्त्वाभाव इष्यते उत भावरूपं किञ्चिदसत्त्वमिति । आद्येऽयमदृष्टान्तः । अभावप्रतिपादकत्वेन विरुद्धार्थप्रतिपादकत्वाभावात् । द्वितीये घटेत्यनन्वितम् । न हि शशशृङ्गादेरिव घटस्यासत्त्वमस्ति । अत एव आपदेवेन 'नास्तीत्यत्र हि' इत्येतावदुक्तम्, न तु घटो नास्तीति । अनन्तदेवेन चात्राभिप्रायं विवृण्वतोक्तम्—एवं च खपुष्पं नास्तीत्यादि-वाक्यगतनास्तीतिपदाभिप्रायो दृष्टान्तग्रन्थेऽपि सङ्गच्छत इति । तदत्र घटपदघटनमविमृश्य कृतम् । अधर्म इत्यादि च विरुद्धार्थं बोध्यम् । एवं नञो विरुद्धार्थत्वे स्थिते प्रकृते तादृशविरुद्धार्थो निवर्तनैवेति सिद्ध्यति । निवर्तनाप्रतिपादकत्वं नञ्सहितस्य लिङ इत्यभिप्रेत्याह—**तदिहेति** । नन्वस्तु समभिव्याहृतपदार्थविरोधिबोधकत्वं नञः । अस्तु च तादृशार्थस्वीकारे प्रकृते निवर्तनाबोधकत्वमपि । परन्तु 'तदन्यतद्विरुद्धतदभावेषु नञ्' इत्यनुशासनेन अभावार्थत्वस्यापि सत्त्वात् स एवार्थः कस्मादत्र न भवतीत्याशङ्कायामाह—**विधीति** । अभावार्थत्वे हि न भक्षयेदित्यत्र अयं मां न प्रवर्तयतीति प्रवर्तनाभावः प्रतीयेत । न हि कदाचिदेवं प्रतीयते । किन्तु सर्वत्रायं मां निवर्तयतीति निवर्तनैव प्रतीयते तस्मादभावार्थत्वमयुक्तमिति भावः । वाक्यार्थो वाक्यजन्यबोधे मुख्यविशेष्यभूतः ।

यदा तु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः। तच्च बाधकं द्विविधम्—तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च। तत्राद्यं नेक्षेतोद्यन्तमादित्यमित्यादौ। तस्य व्रतमित्युपक्रम्यैतद्वाक्यपाठात्। तथा चात्र पर्युदासाश्रयणम्। तथा हि। व्रतशब्दस्य कर्तव्यार्थे रूढत्वात्तस्य व्रतमित्यत्र स्नातकव्रतानां कर्तव्यत्वेनोपक्रमात् किन्तत्कर्तव्यमित्याकाङ्क्षायां नेक्षेतोद्यन्तमित्यादिना कर्तव्यार्थ एव प्रतिपादनीयः। अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात्। तथा च नञर्थेन न प्रत्ययार्थान्वयः। कर्तव्यार्थानवबोधात्। विध्यर्थप्रवर्तनाविरोधिनिवर्तनाया एव तादृशनञा बोधनात्। तस्याश्च कर्तव्यार्थत्वाभावात्। तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षणसङ्कल्प एव लक्षणया प्रति-

---

पूर्वं निरस्तोऽपि नञर्थे धात्वर्थान्वयः क्वचिदङ्गीक्रियत इत्याह—**यदा त्विति**। बाधकस्यानेकत्वाद् विभज्य क्रमेणोदाहरति—**तच्चेति**। **आद्यमिति**। तस्य व्रतमित्युपक्रमरूपं बाधकमित्यर्थः। उदाहरणे बाधकमिदमस्तीत्याह—**तस्येति**। एवं हेतोः सत्त्वात् साध्यमप्यस्तीत्याह—**तथा चेति**। पर्युदासः प्रत्ययार्थव्यतिरिक्तस्य नञर्थान्वयः।

ननु तादृशोपक्रमसत्त्वे प्रत्ययार्थातिरिक्तस्य तत्रान्वय इति को निर्बन्ध इत्याशङ्कापरिहाराय प्रत्ययार्थस्य तत्रान्वयासम्भवम् उपपादयितुमाह—**तथा हीति**। तस्येति पदस्यार्थमाह—**स्नातकस्येति**। स्नातको गुरुकुलात्समावृत्तः। **अन्यथेति**। कर्तव्यार्थप्रतिपादनाभाव इत्यर्थः। **पूर्वोत्तरेति**। तस्य व्रतमित्यस्य नेक्षेतेत्यादेश्चेत्यर्थः। तस्येदं कर्तव्यमित्यस्य आदित्येक्षणान्निर्वर्तितव्यमित्यस्य च न खल्वेकवाक्यता सुवचेति भावः। अस्तु कर्तव्यार्थस्यैव प्रतिपादनीयत्वम्। तेन किमित्यत्राह—**तथा चेति**। कर्तव्यार्थस्यैव प्रतिपादनीयत्वे सतीत्यर्थः। तादृशार्थप्रतिपादनस्यावश्यकत्वे एतदन्वयस्य को विरोध इत्यत्राह—**कर्तव्येति**। एतदन्वयाङ्गीकारेऽवश्यापेक्षितः कर्तव्यार्थबोधो न सम्भवतीत्यर्थः। तत्कथमित्यत्राह—**विध्येति**। प्रत्ययार्थान्वये नञा निवर्तना प्रतिपाद्यत इति तावदुक्तम्। न च निषेधरूपश्रुतवाक्यनिष्ठा निवर्तना पुरुषस्य कर्तव्या भवति। तस्मात् कर्तव्यार्थबोधकत्वं न घटत इति भावः। प्रत्ययार्थान्वयाभावमुपसंहरन्नेव धात्वर्थान्वये सिद्धयन्तमर्थमाह—**तस्मादिति**। **धात्वर्थेति**। ईक्षण-

**पाद्यते। तस्य कर्तव्यत्वसम्भवात्। आदित्यविषयकानीक्षणसङ्कल्पेन भावयेदिति वाक्यार्थः। तत्र भाव्याकाङ्क्षायाम् एतावता हैनसा वियुक्तो भवतीति वाक्यशेषादवगतः पापक्षयो भाव्यतयाऽन्वेति। एवं च पूर्वोत्तरयोरेकवाक्यत्वं निर्वहत्येव। न चात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि सम्भवात्कथमनीक्षणसङ्कल्पस्यैव भावनान्वय इति वाच्यम्। तस्य कर्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्।**

**द्वितीयं यजतिषु ये यजामहं करोति नानुयाजेष्वित्यादौ। अत्र विकल्पप्रसक्तौ पर्युदासाश्रयणात्। तथा हि। यद्यत्र वाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात् तदाऽनुयाजेषु ये यजामह इति मन्त्रस्य प्रतिषेधः स्यात् अनुयाजेषु ये यजामहं न कुर्यादिति। स च प्राप्तिपूर्वक एव प्राप्तस्यैव**

---

रूपो यो धात्वर्थस्तस्य विरोधी यो नेक्षिष्य इति अनीक्षणसङ्कल्पः स इति। एतादृशेऽर्थे शक्त्यभावादुक्तम्—**लक्षणेति**। प्रत्ययार्थान्वये या अनुपपत्तिरुक्ता साऽत्र नास्तीत्याह—**तस्य कर्तव्यत्वेति**। सङ्कल्पं हि पुरुषः कर्तुं शक्त एव। कर्तव्यत्वसम्भवमेव स्पष्टयितुं तस्य विधिविषयत्वं प्रदर्शयन् नेक्षेतेति वचनजन्यबोधमभिलपति—**आदित्येति**।

ननु भाव्यस्याश्रवणात् कथमस्य करणत्वमित्यत्राह—**तत्रेति**। एवमस्यार्थस्य कर्तव्यत्वे एकवाक्यत्वमपि घटत इत्याह—**एवं चेति**। नञा धात्वर्थविरोध्यनीक्षणसङ्कल्प एव लक्षणया प्रतिपाद्यत इति यदुक्तं तत्र किञ्चिदाशङ्क्य परिहरति—**न चेति**। **तस्येति**। अयं भावः—विरोधिपदार्थान्तरमिति किमक्षिनिमीलनादिरूपं प्रतिबन्धकमभिप्रेतम्, उत ईक्षणासामानाधिकरण्यात् तद्विरोधी ईक्षणाभावः। नाद्यः, अनियताक्षिसङ्कोचाद्यपेक्षया अनीक्षणनियतानीक्षणसङ्कल्पस्यैवोपस्थिततरत्वात् कर्तव्यत्वेन प्रतीतेः। न द्वितीयः, अभावस्याकर्तव्यत्वात्। न ह्यभावः कर्तुं शक्यत इति॥

एवं तस्य व्रतमित्युपक्रमरूपं प्रथमं बाधकमुदाहृतम्। अथ द्वितीयं विकल्पप्रसक्तिरूपमुदाहरति—**द्वितीयमिति**। उक्तस्यैव दार्ढ्याय आश्रितो हि ग्रन्थकारैरत्र विकल्पप्रसक्तिहेतुकः पर्युदास इत्याह—**अत्रेति**। विकल्पप्रसक्तिमुपपादयति—**तथा हीति**। प्रतिषेधः 'न कलञ्जं भक्षयेदि'त्यादाविव निवर्तनाविषयत्वम्। अस्तु प्रतिषेधः, ततः किमित्यत्राह—**स चेति**। प्रतिषेधश्चेत्यर्थः। कस्मादित्यत्राह—**प्राप्तस्यैवेति**।

**प्रतिषेधात् । प्राप्तिश्च यजतिषु ये यजामहं करोतीति शास्त्रादेव वाच्या । तत्र प्रतिषेधे विकल्प एव । न तु बाधः । प्राप्तिमूलरागस्येव शास्त्रप्राप्तस्य तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात् ।**

**न च पदे जुहोतीति विशेषशास्त्रेणाहवनीये जुहोतीति शास्त्रस्येव नानुयाजेष्वित्यनेन यजतिषु ये यजामहं करोतीत्यस्य बाधः स्यादिति वाच्यम् । परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात् । पदशास्त्रस्य**

---

अनुयाजेषु ये यजामहः कर्तव्य इति यत् तन्न इति तत्र वाक्यार्थः । तत्र प्रमाणान्तरेण कर्तव्यत्वप्रतीतिमन्तरा कर्तव्य इति यद् इत्यनुवादासम्भवात् तस्य प्रतिषेधः कर्तुमशक्य इत्यर्थः । ततोऽपि किमिति चेदाह—**प्राप्तिश्चेति । शास्त्रादेवेति** । न ह्येवमादिमन्त्रपाठस्य शास्त्रमन्तरा रागादिना प्राप्तिः सम्भवतीति । ततोऽपि किमिति चेद् विकल्पप्रसक्तिरेवेत्याह—**शास्त्रेति** । एवकारं विवृणोति—**न त्विति** । रागप्राप्तकलञ्जभक्षणादिकर्तव्यताया यथा न कलञ्जं भक्षयेदिति प्रतिषेधेन बाधस्तथाऽत्र न भवतीत्यर्थः । को नु रागप्राप्तशास्त्रप्राप्तयोर्विशेष इत्यत्राह—**प्राप्तीति** । प्राप्तेर्मूलं यो रागस्तस्येति । **तन्मूलेति** । प्राप्तिमूलेत्यर्थः । भ्रान्तिहेतुकत्वाद्दुर्बलस्य रागस्य प्रबलेन शास्त्रेण बाधो युक्तः । अन्यत्र तु उभयोः शास्त्रयोस्तुल्यबलत्वाद्बाधो न वक्तुं शक्यत इति भावः ।

एवं शास्त्रेण शास्त्रस्य बाधो नास्तीत्युक्ते अस्तीति कस्यचिच्छङ्कां परिहरति—**न चेति । विशेषशास्त्रेणेति** । प्राकरणिकहोमविशेषमात्रोद्देशेन पदविधायकत्वादस्य विशेषशास्त्रत्वम् । यदाहवनीय इत्यस्य त्वनारभ्याधीतस्य होमसामान्योद्देशेन अग्निविधायकस्य सामान्यशास्त्रत्वमिति ज्ञेयम् । नैरपेक्ष्यमुपपादयति—**पदेति । प्रकृते** नैरपेक्ष्यं नास्तीत्याह—**प्रकृते त्विति** । एवं नैरपेक्ष्याभावात् सामान्यविशेषन्यायेनात्र बाध्यबाधकभावो न भवति । किन्तु सापेक्षत्वात्तुल्यबलत्वमेव । ततश्च विकल्प एवेत्यभिप्रेत्याह—**तस्मादिति** ।

ननु काममस्तु विकल्पः, कोऽनर्थः; येन न्यायसिद्धस्य निवर्तनावाक्यार्थस्य परित्यागेन पर्युदास आश्रीयत इत्याशङ्कायामाह—**स चेति । पाक्षिकेति** । शास्त्रान्तरार्थानुष्ठानकालिकेत्यर्थः । पाक्षिकाप्रामाण्यमेवोपपादयति—**न हीति** । न केवलं दृष्टार्थव्रीहियवस्थल इव शास्त्रस्याप्रामाण्यमेव । किन्तु अदृष्टकल्पनागौरवमपि विकल्पे

**हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षणान्निरपेक्षत्वम् । प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं यजतिषु ये यजामहमित्यस्यापेक्षणान्न निरपेक्षत्वम् । तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव । स च न युक्तः । विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यसम्पातात् । न ह्यनुयाजेषु ये यजामह इत्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति । व्रीहिभिर्यागानुष्ठाने यवशास्त्रस्येव । द्विरदृष्टकल्पना च स्यात् ।**

---

भवतीत्याह—**द्विरिति**। विधिवाक्यानुरोधेन सकृद्, निषेधवाक्यानुरोधेन सकृदिति द्विरदृष्टकल्पनमित्यर्थः। अत्रावश्यकतां प्रदर्शयन्नाह—**विधीति**। यद्यपि क्रत्वर्थत्वमेवात्रेष्यते तथाऽपि—

**व्याख्यायते यथादृष्टः पाठ एव कथञ्चन ।**
**अन्वेषणीयः शक्यत्वे पाठोऽन्यस्तु समञ्जसः ॥**

**पुरुषार्थत्वादिति**। पुरुषप्रवृत्तिनिवृत्तिप्रयोजनकत्वादित्यर्थः। पुरुषप्रवृत्तिफलो हि विधिः। तेन तदुपपत्तये ये यजामहानुष्ठाने कश्चिद्यागोपकारो भवतीति कल्पनीयम्। न ह्यन्यथा निष्फलेऽङ्गे कश्चित् प्रवर्तेत। एवं पुरुषनिवृत्तिफलप्रतिषेधसाफल्याय ये यजामहाननुष्ठानस्यापि यागोपकारजनकत्वं कल्पनीयमिति द्विरदृष्टकल्पना। तदुक्तमापदेवेन—

**विधेर्हि एवं ज्ञायते यदनुयाजेषु ये यजामहकरणे कश्चनोपकारो भवतीति। निषेधाच्च तदकरणादिति ज्ञायते। अनृतवदनाकरणादिव दर्शपूर्णमासयोः। स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः। इति।**

एवमकरणस्य क्रतूपकारकत्वं सोमनाथेनापि दशमाष्टमेऽभिहितम्—

**करणाकरणयोरुभयोरपि प्रयोगविधिविधेयतया क्रतूपकारकत्वावगमेन समानार्थकत्वानपायाद् इति।**

इदं तु तत्र वाच्यम्। अकरणेन कः क्रतूपकारो जायते। अकरणेऽपि नास्ति क्रतोर्वैगुण्यम्। इतराङ्गैरेव तु क्रतूपकारः सिद्ध्यतीति हि तत्र सिद्धान्तः। न तु कृतेरविषयेणाभावरूपेणाकरणेन कश्चिदुपकारः क्रतोः सम्भवति। आपदेवोक्तानृतवदनदृष्टान्ते तु करणे क्रतोर्वैगुण्यम्, अकरणे तदभावमात्रमिति न तत्राप्युपकारः कश्चित्।

विधिप्रतिषेधयोरुभयोरपि पुरुषार्थत्वात् । अतो नात्र प्रतिषेधस्याश्रयणम् । किन्तु नञोऽनुयाजसम्बन्धमाश्रित्य पर्युदासस्यैव । इत्थं चानुयाजव्यतिरिक्तेषु यजतिषु ये यजामह इति मन्त्रं कुर्यादिति वाक्यार्थबोधः । नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात् । एवं च न विकल्पः ।

अत्र च वाक्ये ये यजामह इति न विधीयते । यजतिषु ये यजामहमित्यनेनैव प्राप्तत्वात् । किन्तु सामान्यशास्त्रप्राप्तये यजामह इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयत्वं विधीयते—यद्यजतिषु ये यजामहं करोतीति तदनुयाजव्यतिरिक्तेष्वेवेति ।

नन्वेवं सामान्यशास्त्रप्राप्तस्य विशेषे सङ्कोचनरूपादुपसंहारात्पर्यु-

---

वैगुण्याभाव एवोपकार इति चेत् कथं तस्यादृष्टत्वम् । कथं च तस्य कल्पनीयता । प्रतिषेध्यकरणस्य वैगुण्यजनकत्वे स्थितेऽकरणे तदभाव इति स्वयं सिद्धेः । तदत्राकरणस्यादृष्टोपकारजनकत्वाभिधानं नातीवोपपन्नमिति कथञ्चिदत्र तात्पर्यमन्यथोपपादनीयमिति । नञर्थ प्रत्ययान्वयासम्भवमुपसंहरति—**अत इति** । सिद्धान्तमाह—**किन्त्विति ।**

ननु नञोऽभाव एव शक्तत्वात्कथमनुयाजव्यतिरिक्तेष्वित्यर्थलाभ इत्यत्राह—**नञ इति** । पूर्वोक्तो दोषोऽत्र नास्तीत्याह—**एवं चेति** । यजतिषु ये यजामहं करोति, नानुयाजेषु ये यजामहं करोति, इत्युभयोरेकवाक्यतयाऽनुयाजव्यतिरिक्तेषु यजतिषु ये यजामहं करोतीत्यर्थलाभाद् अनुयाजेषु विधेर्वा प्रतिषेधस्य वा प्रसक्त्यभावेन न विकल्प इति भावः ।

ननु यजतिषु ये यजामहं करोतीत्यनेनैव विधिना सर्वेष्वपि यागेषु ये यजामहस्य विहितत्वात् पुनरपि अनुयाजव्यतिरिक्तेषु यागेषु किमर्थं ये यजामहविधानमित्यनतिविवेकिनः शङ्कां परिहरन्नाह—**अत्र चेति** । नात्रानुयाजव्यतिरिक्तोद्देशेन ये यजामहविधानं शङ्क्यते; अपि तु ये यजामहं करोतीत्यनूद्य अनुयाजव्यतिरिक्तेष्वित्येव विधीयते । एवं च सामान्यविधिना सर्वेषु ये यजामहप्राप्तौ, न सर्वेषु यागेषु अपि त्वनुयाजव्यतिरिक्तेष्विति उद्देश्यसङ्कोचोऽनेन वाक्येन क्रियत इति न कश्चिद्दोष इति भावः । **विधीयत इति** । ज्ञाप्यत इत्यर्थः ।

सामान्यतः प्राप्तस्य सङ्कोच इति श्रुत्वा शङ्कते—**नन्विति** । परिहरति—**नेति** ।

**दासस्य भेदो न स्यादिति चेत्, न, उपसंहारो हि तन्मात्रसङ्कोचार्थः। यथा पुरोडाशं चतुर्द्धा करोतीति सामान्यप्राप्तं चतुर्द्धाकरणम् आग्नेयं चतुर्द्धा करोतीति विशेषादाग्नेयपुरोडाशमात्रे सङ्कोच्यते। पर्युदासस्तु तदन्यमात्रसङ्कोचार्थं इति ततो भेदात्।**

**कुत्रचिद् विकल्पप्रसक्तावप्यनन्यगत्या प्रतिषेधाश्रयणम्। यथा नातिरात्रे षोडशिनं गृह्णातीत्यादौ। अत्र हि अतिरात्रे षोडशिनं गृह्णातीति शास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असम्भवात्। तथा हि। यद्यत्र षोडशिपदार्थेन नञर्थान्वयस्तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात्, स च न सम्भवति। अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधात्। यदि चातिरात्रपदार्थेनान्वयस्तदातिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्, सोऽपि न सम्भवति। तद्विधिविरोधात्। अतोऽत्रानन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः। न च विकल्पप्रसक्तिः। तस्याप्याश्रयणीयत्वात्।**

---

**तन्मात्रेति।** विशेषशास्त्रोपात्तविशेषमात्रेत्यर्थः। **सामान्यप्राप्तेति।** आग्नेयाग्नीषोमीयादिषु प्राप्तेत्यर्थः। **तदन्यमात्रेति।** विशेषशास्त्रोपात्तविशेषव्यतिरिक्तमात्रेत्यर्थः। ततः उपसंहारात्। विशेषशास्त्रोपात्तस्य विशेषस्य नञ्समभिव्यहारे सति पर्युदासः। तदभावे उपसंहार इति फलितम्।

एवं बाधकद्वयहेतुकः प्रतिषेधापवादो निरूपितः। सम्प्रति क्वचिद् विकल्पप्रसक्तिरूपद्वितीयबाधकसत्त्वेऽपि प्रतिषेध एवाश्रीयते, न पर्युदास इत्यपवादापवादमाह—**कुत्रचिदिति**। उदाहरति—**यथेति**। उपपादयितुं प्रतिजानीते—**तथा हीति**। रागप्राप्तप्रतिषेधे विकल्पाभावात्—**शास्त्रप्राप्तेति**। हेतुमुपपादयति—**यदीति**। नातिरात्रइति वाक्ये पर्युदासपक्षे, अतिरात्रे षोडशिभिन्नं गृह्णातीति वा अतिरात्रभिन्ने षोडशिनं गृह्णातीति वा वाक्यार्थो वक्तव्यः। उभयथाऽपि तु न सम्भवति। अतिरात्रे षोडशिनमिति विधिनाऽतिरात्रेऽपि षोडशिग्रहस्य विहितत्वादिति क्रमेणाह—**न चेति**। ननु पूर्वोक्तस्य गुरोर्विकल्पदोषस्य कथमङ्गीकार इत्याशङ्क्य अगत्याऽऽश्रयणीय एवेति परिहरन्नाह—**न चेति**।

**इयांस्तु विशेषो यद्विकल्पापादकप्रतिषेधेऽपि प्रतिषिध्यमानस्य नानर्थहेतुत्वम्। विधिनिषेधोभयस्यापि क्रत्वर्थत्वात्। यत्र तु न विकल्पः, प्राप्तिश्च रागत एव, प्रतिषेधश्च पुरुषार्थः, तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वम्। यथा न कलञ्जं भक्षयेदित्यादौ कलञ्जभक्षणादेः। तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात्। न च दीक्षितो न ददाति न**

---

नन्वत्र प्रतिषेधाश्रयणे कलञ्जभक्षणस्येव निवर्तनाविषयत्वेन षोडशिग्रहणस्यानर्थहेतुत्वं स्यादित्यत्राह—**इयांस्त्विति**। **विकल्पेति**। विकल्पापादको यः प्रतिषेधस्तस्मिन् सत्यपीत्यर्थः। प्रतिषेधेऽपीत्यनेनोक्ताशङ्कानुवादः। प्रतिषिध्यमानस्य षोडशिग्रहणस्य। **अनर्थेति**। नरकेत्यर्थः। हेतुमाह—**विधीति**। **उभयस्यापीति**। यथा विधिः क्रत्वर्थस्तथा प्रतिषेधस्यापि क्रत्वर्थत्वादित्यर्थः। अयं भावः—पुरुषार्थो हि प्रतिषेधः स्वनिवर्तकत्वनिर्वाहाय पुरुषगतनरकरूपानर्थसाधनत्वं प्रतिषेधस्याऽऽक्षिपेत्। क्रत्वर्थस्तु प्रतिषेधो न पुरुषगतानर्थसाधनत्वमाक्षेप्तुमलम्। यदि तु प्रतिषेध्यस्य प्राप्तिः पुरुषार्थतया स्यात् तदा प्रापकसमानविषयत्वात् प्रतिषेधस्य क्रतुप्रकरणगतस्यापि पुरुषार्थत्वं शङ्कितुं शक्यम्। तदपि तु नास्ति। प्रापकस्य षोडशिग्रहणविधेरपि क्रत्वर्थत्वादिति। विशेषं विशदयितुम् अनर्थहेतुत्वं यत्र भवति तत् स्थलं प्रदर्शयति—**यत्र त्विति**। **न विकल्प इति**। प्रतिषेधतुल्यबलस्य प्रापकशास्त्रस्य सत्त्वे हि विकल्पः स्यात्। तादृशशास्त्राभावेन यत्र विकल्पो न भवतीत्यर्थः। **प्राप्तिश्चेति**। लौकिकाल्पसुखेच्छयेत्यर्थः। उदाहरति—**यथेति**। नन्वत्र प्राप्तिप्रतिषेधयोरुभयोः पुरुषार्थत्वाद् विकल्पः कस्मान्न भवतीत्यत्राह—**तत्रेति**। भक्षणनिषेधस्यैव न तु भक्षणविधेरपि। पुरुषार्थत्वात् पुरुषार्थत्वेन श्रवणात्। यदि हि कलञ्जभक्षणस्य पुरुषार्थत्वबोधको विधिः श्रूयेत ततस्तुल्यबलत्वाद्विकल्पः स्यात्। न तथा विधिः श्रूयते। लोकत एवाल्पसुखसाधनत्वमवगम्य हि जातरागः पुरुषस्तत्र प्रवर्तते। तं निवर्तयन् श्रुतः प्रतिषेधोऽल्पसुखरागेण नात्र प्रवर्तितव्यम्, महानर्थहेतुत्वादिति बोधयतीति भावः। एतावता इदमुक्तं भवति—प्रतिषेधस्थले विकल्पो वा प्रतिषेध्यस्यानर्थहेतुत्वं वा। प्रतिषेध्यस्य शास्त्रप्राप्तत्वे विकल्पो रागप्राप्तत्वेऽनर्थहेतुत्वमिति। तत्र योऽयं दशमाष्टमाधिकरणन्यायेन शास्त्रप्राप्तपुरुषार्थाग्निहोत्रहोमादीनामकर्तव्यताबोधको ज्योतिष्टोमप्रकरणे श्रुतः प्रतिषेधो दीक्षितो न ददाति न जुहोतीति तत्र प्रतिषेध्यस्य

**जुहोतीत्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधाद्विकल्पापत्तिरिति वाच्यम् । स्वतः पुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाभावेऽपि निषिध्यमानस्यानर्थहेतुत्वात् । यथा क्रतौ स्वस्त्रीगमनादेः । तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसम्पादकत्वात् ।**

---

अनर्थहेतुत्वं नाश्रयितुं शक्येत । रागप्राप्तत्वाभावात् । प्रतिषेधस्य ज्योतिष्टोमार्थत्वेन पुरुषार्थत्वाभावाच्च । अतो विकल्प एवाश्रयणीय आपतति । स च नोपपद्यते । पुरुषार्थतया प्राप्तानां क्रत्वर्थतया निषेधेन भिन्नविषयत्वात् । एकार्थत्वे हि विकल्पः । यथा षोडशिग्रहणाग्रहणयोः । उभयोरपि क्रत्वर्थत्वात् । एवमनुपपन्नोऽपि विकल्पो भवदुक्तनीत्या क्रत्वर्थे शास्त्रप्राप्तप्रतिषेधेऽस्मिन्नापद्यत इति शङ्कां परिहरन्नाह—**न चेति** । **स्वत इति** । यावज्जीवमग्निहोत्रं जुहोतीत्यादिस्वतन्त्रविधिभिः पुरुषार्थतया विहितानामित्यर्थः । **पुरुषार्थत्वाभावेऽपीति** । एतावता अनर्थहेतुत्वानुपपत्तिशङ्कानुवादः । **निषिध्यमानस्येति** । एकत्वं चिन्त्यम् । होमादीनामित्यर्थः । **अनर्थहेतुत्वादिति** । एवं चानर्थहेतुत्वस्यैवाश्रयणान्न विकल्पापत्तिरित्युक्तं भवति ।

ननु स्वयमेव पूर्वं 'यत्र तु प्राप्तिश्च रागत एव प्रतिषेधश्च पुरुषार्थस्तत्र प्रतिषिध्यमानस्यानर्थहेतुत्वम्' इत्युक्त्वा कथमिदानीं पुरुषार्थतया शास्त्रप्राप्तानामेषां प्रतिषेधस्य पुरुषार्थत्वाभावेऽपि अनर्थहेतुत्वमुच्यत इति शङ्कायाम् अर्थ्यत इत्यर्थ इष्टम्, तद्भिन्नोऽनर्थोऽनिष्टम् । सोऽयमनर्थो द्विविधः—पुरुषगतो नरकरूपः, क्रतुगतो वैगुण्यरूपश्च । तत्र पुरुषगतस्यानर्थस्य निबन्धनं रागप्राप्तत्वं प्रतिषेधस्य पुरुषार्थत्वं च । तत् पूर्वमुक्तम् । क्रतुगतस्य निबन्धनं प्रतिषेधस्य क्रत्वर्थत्वम् । तच्च प्रकृतेऽस्ति । न दीक्षित इत्यादिनिषेधस्य ज्योतिष्टोमप्रकरणगतत्वेन तदर्थत्वादिति समाधानाभिप्रायेण दृष्टान्तमाह—**यथेति** । क्रतौ दर्शपूर्णमासप्रयोगमध्य इत्यर्थः । पुरुषार्थप्रतिषेधविषयककलञ्जभक्षणाद्यपेक्षयाऽन्यादृशानर्थहेतुत्वं स्फुटीकरोति—**तन्निषेधस्येति** । 'न स्त्रियमुपेयात्' इति दर्शपूर्णमासप्रकरणश्रुतस्येत्यर्थः । तस्य स्वस्त्रीगमनादे । क्रतुवैगुण्यं क्रतुगताऽपूर्वानुत्पत्तिप्रयोजिकाऽयोग्यता ।

ननु रागप्राप्तस्य स्त्रीगमनादेः क्रत्वर्थप्रतिषेधवशेन क्रतुवैगुण्यापादकत्वेऽपि शास्त्रप्राप्तहोमादेस्तन्नोपपद्यत इति चेन्नैवम् । क्रत्वर्थप्रतिषेधविषयत्वमात्रस्य तत्र

निबन्धनत्वात्। रागप्राप्तत्वशास्त्रप्राप्तत्वयोस्तत्राविशेषकरत्वात्। अथैवं सति षोडशि-ग्रहणप्रतिषेधस्यापि क्रत्वर्थत्वात् तद्विषयस्य षोडशिग्रहणस्य क्रतुवैगुण्यरूपानर्थहेतुत्व-मवर्जनीयमिति चेत्, न, तत्र प्रापकशास्त्रस्यापि क्रत्वर्थतयैव प्रापकत्वात्। रागप्राप्त-स्य पुरुषार्थतया शास्त्रप्राप्तस्य वा क्रत्वर्थतया प्रतिषेध एव क्रतुवैगुण्यापादकत्व-कल्पनात्। कस्मादिति चेत्, श्रूयताम्—

प्रतिषेधस्तावन्निवर्तनां बोधयन् स्वनिवर्तकत्वनिर्वाहाय प्रतिषेध्यस्यानिष्ट-साधनत्वमाक्षिपतीत्युक्तम्। यदि तु क्वचिद् अनिष्टसाधनत्वाक्षेपमन्तरेणैव निवर्तकत्वं सिध्येत्, न तत्रानिष्टसाधनत्वं प्रतिषेध्यस्यावश्यमाक्षेप्तव्यम्। नातिरात्र इति प्रति-षेधस्य च, प्रतिषेध्यस्य षोडशिग्रहणस्यानिष्टसाधनत्वमनाक्षिपत एव निवर्तकत्वमुप-पद्यते। अतिरात्रे षोडशिनं गृह्णातीति विधिना षोडशिग्रहणस्य क्रतूपकारकत्वमवगच्छन् पुरुषस्तत्र प्रवर्तते। तस्य यदि क्रत्वनुपकारकत्वबुद्धिर्भवति तत एव तस्य षोडशि-ग्रहणान्निवृत्तिः सिध्यति। अनुपकारके हि निष्फले न कश्चित् प्रवर्तेत। एवमनुप-कारत्वबुद्धिमेवायं प्रतिषेधो जनयतीत्यभ्युपगम्यते , लाघवात्। गृह्णातीति विधि-बोधितस्योपकारकत्वस्य प्रतिषेधेनाभावबोधने हि लाघवम्। अनुपस्थितानिष्टसाधनत्व-बोधने तु गौरवम्। न च कथमेकस्मिन् पदार्थे विधिप्रतिषेधाभ्यां मिथो विरुद्धयोरुप-कारकत्वानुपकारकत्वयोर्बोधनं शक्यमिति शङ्क्यम्। प्रतिषेधेनानुपकारकत्वबोधन-द्वारा इतराङ्गैरेव क्रतूपकारसिद्धौ बोधितायां विधिवैयर्थ्यपरिहारायानुष्ठाने फलाति-शयकल्पनेन तत्कामनायां षोडशिग्रहणानुष्ठानम्, अन्यथाऽननुष्ठानमिति विरोधाभावात्। तदेवं समानविषयविधिपूर्वकप्रतिषेधस्थले विधिप्रमितेष्टसाधनत्वाभावमात्रबोधान्न प्रतिषिध्यमानस्यानिष्टसाधनत्वम्। पुरुषार्थविधिप्राप्तविषये तु क्रतुमध्ये निवृत्तिः क्रतुवैगुण्यापादकत्वकल्पनमन्तरेण कथमपि न सिद्ध्यतीत्यलम्।

यदेवं ग्रन्थकारो दीक्षितहोमादीनामनर्थहेतुत्वमाह तदापदेवीयाननुसारि। स-खल्वाह—

न तेषामनर्थहेतुत्वम्। रागप्राप्त्यभावात्। रागतः प्राप्तस्यापि क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्यम्, नानर्थोत्पत्तिः। यथा स्त्र्युपगमनादिप्रतिषेधे। इति।

तदत्र क्रतुवैगुण्यस्याप्यनिष्टत्वादनर्थत्वं वक्तुं सुशकमित्यापदेवोक्त्यनङ्गीकारा-भिसन्धिः प्रतीयत इति विभाव्यम् । तदनुसारी पाठो वाऽन्वेष्टव्यः ।

शास्त्रीयवाक्यविषया कियती किलाद्य
व्युत्पत्तिरित्यवहिता परिचिन्तयन्तः ।
पङ्क्त्यर्थभावविवृतौ बिभृमो महान्तं
यत्नं न वोऽस्तु सुधियो बहुवादबुद्धिः ॥

॥ इति निषेधपरिच्छेदः षष्ठः ॥



## ॥ अथ अर्थवादपरिच्छेदः ॥

**प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः। तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम्। तथा हि। अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद्विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति। स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात्। आम्नायस्य हि क्रियार्थत्वात्। न चेष्टापत्तिः। स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना सकल-**

---

अर्थवादं निरूपयति—**प्राशस्त्येति**। प्राशस्त्यनिन्दयोरन्यतरत् परं प्रधानं विविक्षितोऽर्थोः यस्य तत्। न तु स्वशक्यार्थपरमिति भावः।

ननु कथं वाक्यस्य स्वार्थं विहायार्थान्तरवाचकत्वं भवेत्। न हि घटशब्दः पटमभिदधीत। किमर्थं वाऽर्थान्तरपरत्वाश्रयणमित्यत्र समाधानाभिप्रायेणाह—**तस्य चेति**। अर्थवादस्य चेत्यर्थः। **लक्षणयेति**। शक्तिवल्लक्षणाऽपि हि शब्दस्य वृत्तिः। तया वृत्त्याऽर्थान्तरप्रतिपादकत्वं भवत्येवेति भावः। **प्रयोजनेति**। प्रयोजनवत्यर्थे पर्यवसानं विश्रान्तिस्तात्पर्येण प्रतिपादकत्वम्। वक्तव्यमिति शेषः। चकारो हिकारार्थे हेतौ। तस्य शक्त्यभावेऽपि लक्षणामाश्रित्य प्रयोजनवदर्थवाचित्वं हि वक्तव्यम्। तस्मात् प्राशस्त्यनिन्दान्यतरपरत्वमिति। एतेन स्वार्थस्य प्रयोजनाभावात् त्याग इति सूचितम्।

ननु प्रयोजनवदर्थपर्यवसायित्वे को निर्बन्ध इत्यत्र हेतुमभिधातुमाह—**तथा हीति**। उक्तमेव प्रथमं विवृणोति—**अर्थवादेति**। **स्वार्थेति**। वाक्यानां स्वार्थप्रतिपादनस्य हि फलकामानां पुरुषाणां कर्मानुष्ठानं प्रयोजनम्। यथा विधिवाक्यैर्यागादिषु फलसाधनतया बोधितेषु तत्र पुरुषाः प्रवर्तन्त इति। न च वायुर्वै क्षेपिष्ठा देवतेत्येवमादीनां वाक्यानां तादृशं प्रयोजनं सम्भवतीति—**विधेयेति**। विधेयस्य प्राशस्त्यं निषेध्यस्य निन्द्यत्वम्। अथेदानीं प्रयोजनवदर्थपर्यवसानावश्यम्भावे हेतुमाह—**स्वार्थमात्रेति**। स्वार्थस्य प्रयोजनाभावे स्वयमप्यनर्थकं प्रसज्यत इत्यर्थः। नन्वस्त्वानर्थक्यम्। न हि सर्वं वाक्यं सार्थकमित्यस्ति निर्बन्ध इत्यत्राह—**आम्नायस्येति**।

**वेदाध्ययनं कर्तव्यमिति बोधयता सर्ववेदस्य प्रयोजनवदर्थपर्यवसायित्वं सूचयतोपात्तत्वेनानर्थक्यानुपपत्तेः ।**

**स द्विविधः—विधिशेषो निषेधशेषश्चेति । तत्र वायव्यं श्वेतमालभेत भूतिकाम इत्यादिविधिशेषस्य 'वायुर्वै क्षेपिष्ठा देवता' इत्यादेर्विधेयार्थप्राशस्त्यबोधकतयाऽर्थवत्त्वम् । 'बर्हिषि रजतं न देयम्' इत्यादिनिषेधशेषस्य, सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यादेर्निषेध्यस्य निन्दितत्वबोधकतयाऽर्थवत्त्वम् । न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेन नार्थवादस्यार्थवत्त्वमिति वाच्यम् । आलस्यादिवशादप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात् ।**

---

लौकिकवाक्यानां केषाञ्चिन्निरर्थकत्वेऽपि वैदिकवाक्यानां निरर्थकत्वं वक्तुमनुचितम् । कर्मानुष्ठानफलं हि वेदस्याम्नानम् । तदुक्तं जैमिनिना—'तद्भूतानां क्रियार्थेन समाम्नायः' इति, आम्नायस्य क्रियार्थत्वादिति चेति भावः । आपदेवीये इदं न दृश्यते ।

ननु तत्सर्वं विधिवाक्यविषयम् । अर्थवादवाक्यानां त्वानर्थक्ये इष्टापत्तिरेवेति शङ्कां वारयति—**न चेति** । **सकलेति** । तथा च विधिवाक्यवद् अर्थवादवाक्यानामपि यथावदधीतानां धार्यमाणानाञ्च विधिवत् प्रयोजनवदर्थपर्यवसायित्वं वक्तव्यम् । अन्यथा तदध्ययनधारणानुपपत्तेरिति भावः । **सूचयतेति** । अध्येतव्यम् इत्यत्र कर्मणि तव्यप्रत्ययश्रवणेन यथाश्रुते स्वाध्यायाध्ययनं कर्तव्यमिति बोधितत्वेऽपि षष्ठाद्यभावार्थाधिकरणन्यायपर्यालोचनया प्रयोजनवदर्थज्ञानसाधनीभूतस्वाध्यायमध्ययनेन भावयेदिति वचनव्यक्ति सम्पाद्य प्रयोजनवदर्थपर्यवसायित्वं बोद्धव्यं भवतीत्यभिप्रायेण सूचयतेत्युक्तम् । उपात्तत्वेन विषयीकृतत्वेन ।

प्राशस्त्यनिन्दाऽन्यतरपरत्वमुक्तम् । तत्र कुत्र प्राशस्त्यपरत्वं कुत्र निन्दापरत्वमिति विवेकायार्थवादं विभजते—**स द्विविध इति** । **विधेयार्थेति** । वायुदेवताकयागेत्यर्थः । बर्हिषीति । क्रतावित्यर्थः । निषेध्यस्य रजतदानस्य । **निन्दितत्वेति** । रुद्ररुदिताश्रुप्रभवतया, दीयमानं रजतं दातुर्गेहे रोदनं जनयतीति निन्दा । ननु निष्प्रयोजनं स्वार्थं परित्यज्य प्रयोजनवदर्थान्तरं वक्तव्यमित्युक्त्वा कथं स्वार्थतुल्यमेवार्थान्तरमुच्यते । न हि प्राशस्त्यनिन्दितत्वबोधस्य किञ्चित् प्रयोजनमस्ति । तदाहुः — स्तुतश्चा

स पुनस्त्रेधा । तदुक्तम्—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः' ॥ इति ।

अस्यार्थः—प्रमाणान्तरविरोधे सत्यर्थवादो गुणवादः । यथा 'आदित्यो यूप' इत्यादि । यूपे आदित्यस्याभेदस्य प्रत्यक्षबाधितत्वादादित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते । प्रमाणान्तरावगतार्थे अर्थवादोऽनुवादः । यथा 'अग्निर्हिमस्य भेषज'मिति । अत्र हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वात् । प्रमाणान्तरविराधतत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः । यथा 'इन्द्रो वृत्राय वज्रमुदयच्छत्' इत्यादि ।

एवं च 'यजेत स्वर्गकामः' इत्यादिनिखिलवेदस्य साक्षात्परम्परया वा यागादिधर्मप्रतिपादकत्वं सिद्धम् ।

सोऽयं धर्मो यदुद्दिश्य विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः । ईश्वरार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः, न च तदर्पणबुद्ध्याऽनुष्ठाने प्रमाणाभावः ।

---

स्तुतश्च तावानेव सोऽर्थः इति । तथा च पुनरर्थवादानर्थक्यमिति शङ्कां वारयति—**न चेति**। अयं भावः—विचित्रस्वभावेऽस्मिन् जगति तथाविधा अपि केचिदलसाः सम्भाव्यन्ते ये विधिमात्रेण प्रवृत्ता निषेधमात्रेण निवृत्ताश्च न भवन्ति। तेषामालस्यं निरस्य प्रवृत्तिनिवृत्त्युद्यमसम्पादकत्वाद् नोक्तरीत्या नैरर्थक्यमिति ।

नन्वेवं प्रयोजनवदर्थपर्यवसानं कृत्वा अर्थवादानां सार्थक्यवर्णनमयुक्तम्, 'गावो वै सत्रमासत' इत्येवमादीनाम् अनुपपन्नार्थानाम् उन्मत्तबालवाक्यतुल्यानामानर्थक्यस्यैव न्याय्यत्वादित्यत्र एवंविधा वादा गौणतया नेया इति आप्ततमैः प्राचीनैरेवोक्तमिति समाधातव्यमित्यभिप्रेत्य पुनरर्थवादं त्रेधा विभज्य निरूपयति—**स पुनरिति**। यद्वा ननु एतावदस्मदुक्तं सर्वमापदेवोक्तमेव, तदनुक्तं किञ्चिदुच्यतामिति पृष्ट आह—**स पुनरिति। विरोधे सत्यर्थवाद इति**। विरोधे सत्यर्थवादो यद्वाक्यं तद् गुणवाद इति

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।।**

**इति भगवद्गीतास्मृतेरेव प्रमाणत्वात् । स्मृतिचरणे तत्प्रामाण्यस्य श्रुतिमूलकत्वेन व्यवस्थापनादिति शिवम् ।**

**बालानां सुखबोधाय भास्करेण सुमेधसा ।**
**रचितोऽयं समासेन जैमिनीयार्थसङ्ग्रहः ।। इति ।**

---

बोध्यम् । अत एव उदाहरणे इत्यादीति नपुंसकम् । उज्ज्वलत्वेति । तथा च गुणेन वादो गुणवाद इति द्रष्टव्यम् । **प्रमाणान्तरेति** । प्रमाणान्तरमनु ततः पश्चात् तदनुसारेण वा वादोऽनुवादः । श्लोके तद्धानादिति । तच्छब्देन विरोधावधारणे गृह्येते । तयोर्हानं राहित्यं तस्मिन् सतीत्यर्थः । तदाह—**प्रमाणान्तरेति । भूतार्थेति ।** यत्र न प्रमाणान्तरसंवादस्य सम्भवो न विसंवादस्य, तथाऽपि वृत्तत्वेन वर्ण्यते, स भूतार्थः । तस्य वादः ।

**।। इत्यर्थवादपरिच्छेदस्सप्तमः ।।**

**।। समाप्तश्चायं ग्रन्थः ।।**



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **बृहत्संहिता** ( द्वितीयं संस्करणम् )—श्रीवराहमिहिराचार्यप्रणीतो ज्यौतिषशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थः श्रीभट्टोत्पलविरचितया विवृत्या, अथ च विदुषा सम्पादकेन आचार्यश्रीकृष्णचन्द्रद्विवेदिना प्रणीताभिर्भूमिकादिभिः समलङ्कृत्य प्रकाशितः —
प्रथमो भागः – २००–०० द्वितीयो भागः (शीघ्रप्रकाश्यः)

२. **पाणिनीयधातुपाठसमीक्षा** ( द्वितीयं संस्करणम् )—व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः डॉ० भागीरथप्रसादत्रिपाठिमहोदयैः प्रणीतः। ग्रन्थेऽस्मिन् विदुषा लेखकेन व्याकरणशास्त्रस्य समग्रसाम्प्रदायिकग्रन्थान्तर्गतानां धातुपाठानां मौलिकमनुसन्धानं प्रस्तुतम् –
प्रथमो भागः – ८५-०० द्वितीयो भागः – १३०-००

३. **पाणिनीयप्रबोधः** (द्वितीयं संस्करणम्) — व्याकरणशास्त्रस्य महत्त्वपूर्णोऽयं प्रारम्भिकग्रन्थः पण्डितश्रीगोपालशास्त्रिदर्शनकेसरिमहोदयैः प्रणीतः। ग्रन्थस्यास्य प्रकाशनं विमर्शात्मकभूमिकया, अनुसन्धानात्मकपरिशिष्टादिभिः समलङ्कृत्य सञ्जातम्–१००–००

४. **शिवमहिम्नः स्तोत्रम्** (द्वितीयं संस्करणम्)—श्रीपुष्पदन्ताचार्यविरचितं स्तोत्रमिदमाचार्यश्रीमधुसूदनसरस्वतिविरचितया 'मधुसूदनी'-टीकया, पण्डितश्रीनारायणपतित्रिपाठिकृताभिः 'पञ्चमुखी'-टीकाभिः, अथ च हिन्दीपद्यानुवाद-हिन्दीव्याख्यादिभिः सनाथीकृत्य प्रकाशितम्— १००-००

५. **तन्त्रसङ्ग्रहः** ( द्वितीयं संस्करणम् )—तन्त्रशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थो 'विरूपाक्षपञ्चाशिका', 'साम्बपञ्चाशिका', 'स्पन्दप्रदीपिका'-प्रभृतिविभिन्नतन्त्रग्रन्थसङ्ग्रहात्मकः सुसम्पाद्य प्रकाशितः —
प्रथमो भागः – ६६–०० द्वितीयो भागः – ७२–००
तृतीयो भागः – ६६–०० चतुर्थो भागः – ७०–००
पञ्चमो भागः – १४०–००

६. **कालीकल्पद्रुवल्लरी**—तन्त्रशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थो विविधशास्त्रान्तर्गतानां 'कालीस्तुतीनां' सङ्ग्रहरूपेण सुसम्पाद्य विदुषा सम्पादकेन श्रीरामनारायणत्रिपाठिना प्रणीताभिर्भूमिका-टिप्पणी-परिशिष्टादिभिः समलङ्कृत्य प्रकाशितः — २४०–००

७. **त्रिपुरारहस्यम्** ( तृतीयं संस्करणम् )—तन्त्रशास्त्रस्यापूर्वोऽयं ग्रन्थः पण्डितश्रीश्रीनिवासप्रणीतया 'तात्पर्यदीपिका'-व्याख्यया समलङ्कृत्य प्रकाशितः — १४०–००

८. **युक्तिदीपिका**—श्रीमदाचार्य-ईश्वरकृष्णविरचितं सांख्यदर्शनस्य महत्त्वपूर्णग्रन्थमिदम् आचार्यश्रीकेदारनाथत्रिपाठिकृतया हिन्दीव्याख्यया सनाथीकृत्य प्रकाशितम्—
३००–००

९. **तत्त्वमुक्ताकलापः** —वेदान्तदर्शनस्य महत्त्वपूर्णोऽयं ग्रन्थो निगमान्तमहादेशिकप्रणीतः। ग्रन्थोऽयं 'सर्वार्थसिद्धि'-'आनन्ददायिनी'-'अक्षरार्थ' इति त्रिभिर्व्याख्याभिः समलङ्कृत्य प्रकाशितः — प्रथमो भागः – १२०-०० द्वितीयो भागः – २००-००

१०. **पण्डितपरिक्रमा** —ग्रन्थस्यास्य प्रकाशनं 'पण्डितपत्रिकायां' १८६६ ई० तः १८७१ ई० यावत् प्रकाशितानां विशिष्टसंस्कृतनिबन्धानां सङ्कलनरूपेण कृतम्—
प्रथमो भागः – १६०-०० द्वितीयो भागः – १६०-००

११. **सारत्थदीपनीटीका** —भदन्तसारिपुत्तत्थेरप्रणीतमिदं ग्रन्थरत्नं 'सिंहली'-'बर्मी'-लिपितो देवनागर्यां लिप्यन्तरीकृत्य सुसम्पाद्य च प्रकाशितम्— प्रथमो भागः – १२०-००
द्वितीयो भागः – ११२-०० तृतीयो भागः – २५०-००

१२. **धर्मसमुच्चयः** —श्री-अवलोकितसिंहभिक्षुप्रणीतोऽयं ग्रन्थः सरस्वतीभवनस्थपाण्डुलिपीनाधारीकृत्य सर्वप्रथमं सुसम्पाद्य सारगर्भितया भूमिकया, शास्त्रीयटिप्पणीभिः, अनुसन्धानात्मकपरिशिष्टैश्च संयोज्य प्रकाशितः — २५०-००

---

**पत्रव्यवहारसङ्केतः–प्रकाशनाधिकारी,सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी–२२१००२**